## अथ हलन्तपुँल्लिङ्गाः ।

**लिडिति** ॥ लिह आस्वादने क्विप् । **लिट्सु, लिट्त्स्विति** । ढस्य जश्त्वेन डः तस्य "खरि च" (पा० सू० ८।४।५५) इति चर्त्वेन टः, तस्यासिद्धत्वात् "ड: सि" (पा० सू० ८।३।२९) इति धुट् चर्त्वं तकारः । "न पदान्ताट्टोः" (पा० सू० ८।४।४२) इति ष्टुत्वनिषेधः । "चयो द्वितीयाः—" (का० वा०) इति तु नेह प्रवर्तते । चर्त्वस्यासिद्धत्वात् । एतेन ते च प्रत्याहारा एकचत्वारिंशदिति प्राचो ग्रन्थं व्याचक्षाणैर्यदुक्तं लिट्सु लिठ्स्विति टठाभ्यां रूपद्वयमिति तत् प्रत्युक्तम् । तथा च प्रातिशाख्येऽपि—'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्' इति श्लोकेऽपदान्तेत्यादिविशेषणं सङ्गच्छते ।

**"दादेर्धातोर्घः"** (पा०सू० ८।२।३२) ॥ धातोरित्यावर्त्तते, तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—**उपदेश इति** ।

---

## अथ हलन्तपुँल्लिङ्गाः ॥

धुडिति । "डः सि" (पा०सू०८।३।२९) इतिसूत्रेऽनुवृत्तं पदस्येति व्यधिकरणं पदावयवस्य सस्येत्यर्थ इति भावः । एके द्वितीयमिति । अत्रत्यवार्तिककारा इत्यर्थः । अपदान्तभाजमिति । इदमचर्त्वभाजमित्यर्थोपलक्षकम् । पदान्ते प्रायो जश्त्वप्राप्त्या चर्त्वं विना चयोऽलाभात् । तथा चेति वदता मूलकृता अस्यार्थस्य सूचनात् । अत एव सुगणठ्षष्ठ इत्यादौ भवत्येव । टुगादीनां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्त्या चर्त्वस्याप्यभावादिति भावः ।

धातोरित्यावर्तत इति । इदं प्राचामनुरोधेन । दादेरित्यावर्तते इति युक्तम् ।

---

## अथ हलन्तपुँल्लिङ्गाः ॥

यत्तु "डः सि धुड्" इतिसूत्रे सप्तमीनिर्देशत्वेन सादेः पदस्येत्यर्थकल्पनात्कथमत्र धुडिति कस्यचिदुक्तिः, सा नोचिता विशेषणबोधकस्य सप्तम्यन्तस्य तदादिबोधकत्वं सप्तम्यन्तविशेष्यबोधकसन्निधान एवेति सिद्धान्तादित्याह पदस्येति व्यधिकरणमेवेत्याह—डः सीतीति । एक इत्येतदर्थस्यान्यत्वविशिष्टस्याभियुक्तत्वसूचनायाह—अत्रत्येति । अपदान्तभाजमित्यपदान्तशब्दस्य भावप्रधाननिर्देशेन पदान्तत्वपरतया पदान्तत्वरहितमित्यर्थः स्यात्तथाच सुगणठ्षष्ठ इत्यस्य सिद्धिरतस्तदर्थमाह—इदमचर्त्वेति ।

धातुपदस्य "दादेः" इति सूत्रे स्थितस्य धातुप्रकृतिककर्तृक्विबन्तदामलिहादिभ्यावृत्त्या तस्य चारितार्थ्येनोपदेश इत्यर्थलाभप्रयोजकत्वन्न स्यादत आह—मूले—धातोरित्यावर्तते इति । अयम्भावः—सौत्रन्धातोरिति पदम् "एकाच" इत्युत्तरसूत्रस्थ तद्घाट्शब्दावयवादाह इत्यस्यैकाचःत्वेन दस्य धकारवारणायावश्यकमिति प्रकृतसूत्रेऽप्युपकारकोऽस्तु तावताऽप्युपदेशकाल इत्यर्थालाभः

धातोरित्यनेन हि औपदेशिकस्य धातोरित्यर्थेन दामलिहो व्यावृत्तावपि अधोगिति न संगृह्येत । दादेर्दादेरित्यनेनोपदेशकालिकदादेरित्यर्थकेनोभयं सिध्यति । उपदेशकालमित्यस्य तात्कालिकं लक्षयतीत्यर्थः । उपदेशे दादेरिति तु फलितोऽर्थः । वाच्यार्थत्वे षष्ठ्यन्तस्य सप्तम्या विपरिणामोऽपि कर्तव्यः स्यादिति गौरवम् । धातोरित्यस्यैव लक्षणया तथार्थकस्य दादेरित्यनेनान्वयेऽपि न क्षतिरित्याशयेन तु मूले धातोरित्युक्तम् । अत एव भाष्ये घत्वस्यासिद्धत्वाद्धुगित्यत्र ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधायाथवा एवं वक्ष्यामि हो ढोऽदादेरिति ततो धातोरिति दादेरिति वर्तते नेति निवृत्तमित्युक्तम् । द्रुहेस्तु "वा द्रुह" (पा०सू०८।२।३३) इत्यनेन ढत्वस्यापि विधानात् ध्रुडित्यादौ न दोष इति तदाशयः । तत्र "धातोः" (पा०सू०६।१।११) इति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्त(१)राभावेन तदुपदेशवद्दादिलक्षकं सामर्थ्यात् । अर्थाधिकारानुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम् । अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ । एवं च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादिलक्षकतोचिता । आवृत्त्याश्रयणं तु बालानां स्फुटं तत्प्रतिपत्तय इति बोध्यम्(२) । न चोपदेशे इत्येव कुतो नोक्तम्, गौरवापत्तेः । धातोरिति तु

---

स्यादत-आवृत्तियुक्तेति । प्राचाम्-हरदत्तादीनाम् । प्राचामित्युक्तिबीजम्प्रकटयति-धातोरिति । न संगृह्येतेति । तथाव्याप्तिरस्यैवेति भावः । कालमात्रे लक्षणायामपीष्टासिद्धिरत आह—तात्कालिकमिति । एवञ्चोपदेशकालपदे बहुव्रीहिरिति स्वीकार्यम्, उपदेशकालिकदादित्ववतो धातारिति सूत्रार्थः । वाच्यार्थत्वे—मूलवाक्यवाच्यार्थपरत्वे सप्तम्या तदन्तेन अपिना आवृत्तिलक्षणायाः समुच्चयः । मूलसङ्गतिम्परिहरन्नाह—धातोरित्यस्यैवेति । अत एव—दादिपदस्यैवौपदेशिकदादित्ववत इत्यर्थकत्वादेव । एतेन स्वोक्तव्याख्या भाष्यकारसम्मतेति दर्शयति—अपवादत्वेनेति । दादेरिति । विशेषत उपादानेन विधीयमानढत्वन्निरवकाशत्वेन ढत्वस्य बाधकमिति भावः । अथवेति । संहितायाः सूत्रपाठाभिप्रायेण 'होढोऽदादेः' इति पृथक्करणम्, तथा च दुहधातोर्दादित्वान्न ढत्वप्राप्तियोग्यतेति धुगित्यत्र घत्वमेव भविष्यति । अस्मिन्पक्षे घत्वमुत्सर्गः, ढत्वमदादिधातोर्विहितमपवाद इति घत्वमर्थाद्दादिधातोरेव भविष्यतीति दादिपदं यथाश्रुतार्थकमनर्थकमिति भावः । ततो 'धातोः' इतीत्यस्य धातोर्घ इत्यर्थः । नन्वेवन्न्यासे द्रुहधातोः "वाद्रुह" इति सूत्रविहितघत्वाभावपक्षे ढत्वन्न स्यादत आह—द्रुहेस्त्विति । तत्रोपात्तो वाशब्दस्समुच्चयार्थ इति व्याख्यास्यत इति भावः । तदाशयः—भाष्याशयः । तत्र—अन्त्यपक्षे । फलान्तराभावेन—अदादिव्यावृत्तिरूपफलाभावेन । असिद्धत्वेनादादौ तस्याप्रवृत्तिः सिद्धवेति भावः । तत्—दादिपदम् । नन्वेवमुत्तरसूत्रेऽनुवृत्तिसामर्थ्यात्तल्लाक्षणिकमस्तु पूर्वसूत्रे तु दादिव्यावर्तकत्वेन चरितार्थमिति दामलिडित्यादौ ढत्वन्न प्राप्नोतीत्यत आह—अर्थाधिकारेति । चस्त्वर्थ, एवम्—औपदेशिकदादित्ववल्लक्षकम् । अत एव—उक्तार्थलाक्षणिकत्वादेव, यद्यप्यन्यत्रोपदेशोद्देशपदविषयसङ्कीर्णता दर्शिता, तथाप्यत्र दादिपदसामर्थ्याद्भेदः कल्प्यत इति भावः । एवञ्च—उक्तरीत्येष्टसिद्धौ च । तदेकवाक्यतया—उत्तरपदैकवाक्यतया । उचितेति । द्वयोः पक्षयोः फलैक्यस्यौचित्यप्रयोजकत्वम् । नन्वेवमावृत्तिकथनविरोधोऽत आह—आवृत्त्येति । स्फुटप्रतिपत्तये उपदेशे इत्येव वाच्यमिति कस्यचिच्छङ्कान्निरस्यति—न चेति । गौरवेति । पदगौर-

---

प्र० (१) फलान्तराभावेनेति । दादतिरिक्तधातौ "पूर्वत्रासिद्धम्" (पा०सू० ८।१।१) इति घत्वस्यासिद्धत्वाद् ढत्वस्य जायमानत्वेन तत्र घत्ववारणाय तदनुवृत्तिर्न सम्भवतीति भावः ।

प्र० (२) वस्तुतस्तु अत्रानुवृत्तदादिपदस्य दादिर्यो धात्ववयव इति वैयधिकरण्यान्वयसम्पाद-

आवृत्तिफलं पृच्छति—**उपदेशे किमिति**। अव्याप्त्यतिव्याप्ति-परिहारः फलमित्याह—**अधोगित्यादिना**।

"**एकाचो बशो भष्**" (पा०सू० ८।२।३७)॥ **झलीति निवृत्तमिति**। यत्तु प्राचोक्तम्—प्रातिपदिकसंज्ञस्य तु झलि परतः पदान्ते चेति, तत्प्रामादिकमेव। अधोक् अधोग्, अजघ्री इत्याद्यसिद्ध्यापत्तेः। प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च। तत्र झलो निमित्तत्वानुपयोगाच्च। धुग्भ्यां धुक्षु इत्यादौ पदान्त इत्येव सिद्धेः। यदपि तत्पौत्रेण व्याख्यातम्—झलि परे प्रातिपदिकसंज्ञस्यैवेत्यादि, तदपि निर्मूलं निष्फलं चेत्युपेक्ष्यम्। **भष्भाव इति**। जश्त्वचर्त्वयोरसिद्धत्वात्ताभ्यां

---

तद्वाडित्यादिव्यावृत्तये उत्तरत्रावश्यकम्। अव्याप्तीति। अधोगित्यादौ सा। ननु धातोरवयवो यो दादिरित्यर्थे इष्टं सिद्धं, वैयधिकरण्यं च गर्दभयतेरप्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं, दोग्धेति व्यपदेशिवद्भावात्सिद्धम्। स्पष्टं चेदं भाष्येऽत आह—**अतिव्याप्तीति**। दामलिडित्यादौ सा। न च प्रागुक्तभाष्योत्तरमधोक्सिद्धये वैयधिकरण्यान्वयपर्यन्तं भाष्यकृतोऽनुधावनं व्यर्थमिति वाच्यम्। दादेरिति वर्तते इत्यस्योक्तमाशयमजानत 'एवमपि धोऽदादेरित्युच्यते। तत्राधोक् न सिद्ध्यति' इति शङ्कायामुत्तरसूत्रार्थमपि प्रसङ्गान्निर्णेतुं दादिपदलक्षणायामधोगित्यस्यासाधारणफलत्वाभावं दर्शयितुं च तथोक्तेः। अत एवाग्रे वैयधिकरण्यस्योत्तरार्थमावश्यकत्वोक्त्येहार्थमनावश्यकत्वं भाष्ये ध्वनितं सङ्गच्छत इत्यलम्।

तत्प्रामादिकमिति। धुग्भ्यामित्यादेः पदान्तत्वादेव सिद्धेरिति भावः। उपे-

---

क्ष्येत्यर्थः। नन्वेवमुपदेशे दादिर्धातुरेवेति धातोरिति व्यर्थमत आह—**धातोरिति त्विति**। इत्यादिव्यावृत्तये—इत्यादौ भष्भावलक्ष्यत्वस्य व्यावृत्तये। अधोगित्यादावपि नाव्याप्तिरित्याशङ्कते—**नन्विति**। यदि दादिपदमौपदेशिकदादित्ववल्लक्षकं तदोत्तरभाष्यविरोध इति शङ्कां निरस्यति—**न चेति**। प्रागुक्तभाष्येति। घत्वस्यासिद्धत्वादित्यादि निवृत्तिमित्यन्तभाष्येत्यर्थः। व्यर्थमिति। आवश्यकदादिपदलक्षणयैवेष्टसिद्ध्या तद्व्यर्थमिति भावः। तथोक्तेरिति। वैयधिकरण्येनान्वयोक्तेरित्यर्थः। अत एव—पूर्वसूत्रे सामानाधिकरण्येनोक्तरीत्या ससम्बन्धेऽपीष्टसिद्धेरेव।

यद्वर्दीयव्याख्यानफलं तदन्यथासिद्धमित्याह—**धुग्भ्यामिति**। खण्डनकृदुक्तिं निरस्यति—

---

नेन चारितार्थ्यसम्भवे उपदेशकालिकदादीत्यर्थे लक्षणाश्रयणे न मानम्। न चैवं अर्थाधिकारानुरोधात्पूर्वयोगेऽपि 'अदादेः' इति पदस्य दादिधात्ववयवभिन्नस्येत्यर्थे क्यजन्तदामलिट्शब्दे ढत्वानापत्तिरिति वाच्यम्। इष्टापत्तेः। अत एव भाष्ये घोऽदादेरित्युच्यते कथमधोगिति शङ्कायां धातोरवयवो यो दादिरिति वैयधिकरण्येन समाधानमुक्तम्। भवन्मते दामलिट्शब्दे घत्ववारणायावश्यमुपदेशकालिकार्थे लक्षणाया आश्रयणीयत्वेन तेनैव अधोगित्यस्य सिद्धौ घोऽदादेरित्युच्यते इति शङ्काया, वैयधिकरण्येनेह सूत्रे समाधानस्य चासङ्गतिः स्पष्टैव। तस्मान्निरुक्तार्थे लक्षणाश्रयणं न युक्तम्। अत एव द्वितीययोगे धातुग्रहणस्य सार्थक्यम्। अन्यथौपदेशिकदादित्ववतो धातोरेव सम्भवेन धातुभिन्नस्य तथाभूतस्य अप्रसिद्ध्या तद्ग्रहणं व्यर्थमेव स्यादिति विभावनीयम्।

प्रागेवेति भावः । **षत्वचर्त्वे इति ।** चर्त्वस्यासिद्धत्वात् पूर्वं षत्वं, ततश्चर्त्वमिति भावः ।

**"वा द्रुह"** (पा०सू० ८।२।३२) ।। द्रुहेर्दादित्वात् नित्यं प्राप्तेऽन्येषामप्राप्ते उभयत्र विभाषेयम् । ननु द्रुहादयो दिवादिषु अनेनैव क्रमेण पठ्यन्ते, तत्र 'वा द्रुहादीनाम्' इत्येवास्तु दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिः, तदन्तर्गणो द्रुहादिरस्तु । मैवम् । तथा हि सति यङ्लुकि न स्यात् । 'निर्दिष्टं यद्गणेन च' इति निषेधात् । दोध्रुक्, दोध्रुट् ।

**"इग्यणः"** (पा०सू० १।१।४५) ।। **यणः स्थाने इति ।** विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणमिति भावः ।

---

द्वयमिति । एतेन "एकाचो बश" (पा०सू०८।२।३७) इति सूत्रे "हृस्वादङ्गात्" (पा०सू०२।४।२७) इत्यतोऽङ्गादित्यनुवर्तते, अङ्गं च द्विविधं धातुरूपं प्रातिपदिकरूपं च । तत्र धातोः पदान्त एव, प्रातिपदिकस्य झलि पदान्ते चेति प्राचामाशय इत्यपास्तम् । स्वरितत्वकल्पनविभक्तिविपरिणामादीनां निर्मूलत्वान्निष्फलत्वाच्च । तद्धाट्(१) तद्धाड्भ्यामित्यादावतिव्याप्तेश्चेति दिक् ।

निषेधादिति । भष्भावस्तु एकाज्ग्रहणेऽपि अजर्घा इति भाष्योदाहरणेन निषेधानित्यत्वाद्भवतीति भावः । "श्तिपाशपा" इति भाष्यानुक्तत्वादप्रमाणं वैचित्र्याय तु तथा नोक्तमित्यन्ये ।

**सूत्रशाटकवदिति ।** अस्य सूत्रस्य शाटकं वयेत्यादौ 'यदि वातव्यो न शाटको यदि शाटको न वातव्यः' इति विरोधमाशङ्क्य 'मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा संज्ञा भवति' इति भाष्ये उक्तम् । तथा प्रकृतेऽपि यणः स्थाने स भवति यस्य सम्प्रसारणशब्देन(२) जातस्य सम्प्रसारणसञ्ज्ञाभवतीत्यर्थ इति भावः । तेन

एतेनेति । निष्फलत्वकथनेन । वस्तुतः स्वरितत्वाभावादाह—कल्पनेति ।

ननु यदि "श्तिपा शपा" इत्याश्रीयते, तर्हि भष्भावोऽपि न स्यादत आह—भष्भावस्त्विति । स्वसिद्धान्तरीत्याह—श्तिपाशपेति । वैचित्र्यायेति । लघुना शब्देनेष्टार्थस्य लाभेऽपि क्वचित् स्पष्टप्रतिपत्तये गुरुभूतशब्दोच्चारणमपि साध्वित्येव वैचित्र्यमिति भावः । तथा मूलोक्तरीत्या न्यायस्य स्वरूपन्दर्शयति—अस्येत्यादिना । तेन—सम्प्रसारणशब्देन जातस्येतिव्याख्यानेन ।

प्र० (१) तद्धाडिति । न चात्र दकारस्य धत्वेऽपि पदान्तत्वाज्जश्त्वेन दत्वे न रूपे विशेष इति वाच्यम् । तं दृयते इत्यर्थे तच्छब्दोपपदकाद् 'दूङ् परितापे' इत्यस्मादन्तर्भावितण्यर्थात् क्विपि तद्दूरिति जाते तदुपपदकादाङ्पूर्वात् 'अह व्याप्तौ' इत्यस्मात् क्विपि जायमानतद्धाड्शब्दघटकधात्ववयवदकारे दोषोद्भावने तात्पर्यसत्त्वात् ।

प्र० (२) सम्प्रसारणशब्देन जातस्येति । न चैवं "वसोः सम्प्रसारणम्" (पा०सू० ६।४।१३१) इत्यादिविधिसूत्रेषु यावत्पर्यन्तं वाक्यार्थो न जातस्तावत् सम्प्रसारणशब्देन जातत्वज्ञानस्याभावात्तद्वाक्यार्थज्ञानाधीनं सम्प्रसारणशब्दजातत्वज्ञानं, तज्ज्ञाने च पदार्थज्ञानपूर्वको वाक्यार्थबोध, इत्यन्योन्याश्रय इति वाच्यम् । सम्प्रसारणशब्दभाविते यणुस्थानिकेत्वावच्छिन्ने च सम्प्रसारणशब्दस्य खण्ड-

"वाह ऊठ्" (पा० सू० ६।४।१३२) ॥ "वसोः सम्प्रसारणम्" (पा०सू० ६।४।१३१) इत्यतोऽनुवृत्तं सम्प्रसारणमूठो विशेषणम्। तेन "अलोऽन्त्यस्य" (पा०सू०१।१।५२) इति न। यत्तु प्राचा वाशब्दस्येत्युक्तम्। नासौ सूत्रार्थः। किन्तु कथं चित्फलितार्थकथनपरतया नेयम्। **छन्दस्येवेति**। "छन्दसि सहः" (पा० सू० ३।२।६३) "वहश्च" (पा०सू०३।२।६४) इति सूत्रे छन्दसीत्यनुवृत्तेरिति भावः। यत्तु ऊठि कृते सवर्णदीर्घः भूहः भूहेत्यादि प्राचोक्तम्, तद्भाष्यविरुद्धम्। तथा हि-ऊठ्ग्रहणं मास्तु। सम्प्रसारणमेव विधीयताम्। तस्य लघुपधगुणे कृते "वृद्धिरेचि" (पा०सू०१।१।१) इति वृद्धौ सिद्धं विश्वौह इत्यादि। एवं स्थिते क्रियमाणं बहिरङ्गपरिभाषां ज्ञापयति। सत्यां हि तस्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम्। नन्वनकारान्तेऽकारान्तोपसर्गे चोपपदे रूपे विशेषः स्यादिति चेन्मैवम्। भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाभावस्यानुमानादिति कैयटहरदत्तादयः। एतेन "वार्यूहः प्रोहः" इत्यादिप्रयोगा अपि परास्ताः। अथवा ऊहतेः क्विप् इत्यवधेयम्।

"वसुस्रंसु" (पा० सू० ७।२।७२) वसुः प्रत्ययः। तेन तदन्तं ग्राह्यम्। "ससजुषोरुः" (पा० सू० ८।२।६६) इति सूत्रात् 'स' इत्यनुवर्तते, तच्च वसोरेव विशेषणम्, न तु स्रंसुध्वंस्वोः। अव्यभिचारादिव उतो न सम्प्रसारणत्वम्।

फलितार्थेति। सम्प्रसारणपूर्वत्वाभ्यां फलितेत्यर्थः। ऊठि कृते इति। भूवाट्शब्दे इति शेषः। क्रियमाणमिति। ऊठ्ग्रहणमित्यर्थः। तादृशस्थले इति। भत्वविषये इत्यर्थः। भूवाडित्यादि तु भवत्येव। ऊहतेरिति। एतद्वार्यूह इत्येतद्विषयम्।

अव्यभिचारादिति। स्रंसुध्वंस्वोर्विच् तु नास्त्यनभिधानात्। अतः संयोगान्तलोपे तत्र व्यभिचार इत्यपास्तम्। अत एव भाष्यकृता सस्येत्यननुवृत्तौ पपिवान्

ननु परममूलोक्तोदाहरणे ऊठि कृते न सवर्णदीर्घस्य प्राप्तिरत आह—भूवाडिति। अनकारान्तोपपद इत्यर्थभ्रमवारणाय—भत्वेति। एतेन सर्वत्र तदभाव इति कस्यचिदुक्तिः प्रयुक्ता, यावता विनाऽनुपपत्तिस्तावत एव ज्ञाप्यत्वात्। मूले—अथवा ऊहतेरिति। एतच्च समाधानं वार्यूह इत्येतद्विषयम्। न च प्रोह इत्यत्राप्यस्त्विति वाच्यम्, अस्याकारान्तस्योहशब्दस्याकृदन्तत्वात् "प्रादूहोढा" इत्यत्रोढसाहचर्येण कृदन्तस्यैव ग्रहणात्। अर्थवत एव तत्र ग्रहणाच्च। अस्यानर्थक्यन्तु स्पष्टमेवेत्याह—एतदिति।

ननु स्रंसुध्वंस्वोरपि विचि हल्ङ्यादिलोपसंयोगान्तलोपयोः कृतयोः सकारान्तत्वाभावाद्व्यभिचारसम्भवादव्यभिचारादित्यसङ्गतमत आह—स्रंस्वित्यादि। अत एव—अनुवर्तमानसग्रहणस्य वसुमात्र-

शः शक्तिस्वीकारेण सम्प्रसारणविधिस्थले सम्प्रसारणशब्दभावितत्वांशस्य मोषणात्कदोषाभावात्। 'हलः' इत्याद्यनुवादस्थले चोभयांशोपस्थित्या युभ्याम् अपाचि इत्यादौ सम्प्रसारणशब्दभावितत्वाभावाच्च "हलः" (पा० सू० ६।४।२) इति दीर्घापत्तिः।

रात्। नाप्यनडुहाऽसम्भवादित्यभिप्रेत्याह—**सान्तवस्वन्तस्येति।** **पदान्ते इति।** झलीति तु प्राचः प्रमादः, स्रस्तमित्यादावतिव्याप्तेः।

**"सहेः साडः सः"** (पा० सू० ८।३।५६)॥ सहेरिति किम्, सह डेन वर्तत इति सडः। यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति। सडस्यापत्यं साडिः॥ इति हान्ताः॥

**"दिव औत्"** (पा०सू० ७।१।८४)॥ **प्रातिपदिकस्येति।** अव्युत्पन्नस्य "दिवेर्डिविः" इति न्यासोहितसूत्रेण व्युत्पन्नस्य वा, न तु 'दिवु क्रीडायाम्' इति धातोः। 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इतिपरिभाषया। तेनाक्षद्यूरित्यादौ न भवति। औतस्तकार उच्चारणार्थः। **सुद्युभ्यामिति।** उकारस्य सम्प्रसारणत्वात् "हल" (पा० सू० ६।४।२) इति दीर्घः प्राप्त 'उत्' इति तपरत्वसामर्थ्यान्न भवति। यत्तु प्राचोक्तम्—'दिवो वा आत्वममि' इति, तदुपेक्षितम्। मुनित्रयानुक्तेर्निष्फलत्वाच्च।

इत्यत्रैव दत्वशङ्का कृता, अनुवृत्तौ चानडुद्भ्यामित्यत्रैव दत्वाभावशङ्का कृतेति दिक्।

**न्यासोहितेति।** न्यासकृदूहितेत्यर्थः। **निरनुबन्धकेति।** डिवः प्रत्ययस्य सानुबन्धकत्वेऽपि तदन्तस्यातथात्वादिति भावः। इदं चात्र सूत्रे भूवादिसूत्रे च भाष्ये स्पष्टम्। **उच्चारणार्थ इति।** न तु स्वरितार्थः। उच्चारणार्थानामित्सञ्ज्ञायामपि (१)"प्रत्ययग्रहणम्" इति वार्तिकेन तदप्रवृत्तिरिति भावः। **सम्प्रसारणत्वादिति।** अतद्भावितस्यापि सञ्ज्ञेति पक्षे इदम्।

विशेषणत्वस्य तादृशस्थले विचोऽनभिधानस्याभिप्रेतत्वादेव। ननु 'नचोदाहरणमादरणीयम्' इति न्यायेन वस्वन्तोदाहरणमुपलक्षणमस्त्वित्यत आह—**अनुवृत्ताविति।** यद्युपलक्षणत्वमभिप्रेतं स्यात्तदा प्रथमम्परित्यज्याग्रिमकथनं सन्दर्भविरुद्धं स्यादिति भावः।

न्यासपदस्य ग्रन्थाभिधायकत्वेन न्यासो हि नेत्यसङ्गतमत आह—**न्यासकृदिति।** **अतथात्वादिति।** सानुबन्धकत्वाभावादित्यर्थः। डकारस्य प्रत्ययोपदेशमादायेत्संज्ञाप्रवृत्त्या तदनुबन्धत्वमेवेति अत्र न्यासकृदित्यनेन तस्य व्युत्पन्नत्वन्तन्मते, स्वमते त्वव्युत्पन्नत्वमेवेति ध्वनितम्। अक्षद्यूरित्यर्थं निरनुबन्धकपरिभाषाया दोषाभावप्रतिपादनमसङ्गतम्, तत्रत्यसोर्दिवप्रकृतिकत्वविरहादेवाप्राप्तेरिति तु न शङ्कनीयम्, अङ्गाधिकारे तदन्तग्रहणस्य सम्भवात्। अत एव परमद्यौरित्यत्र भवति सूत्रप्रवृत्तिरत आह—**इदञ्चेति।** एतेन सा परिभाषा भाष्यप्रामाण्यादप्रत्ययग्रहणेऽपि प्रवर्तते इति ध्वनितम्। **उच्चारणार्थ इति।** शब्दउच्चारणमेवार्थं इत्येवकारगर्भबहुव्रीहिसंज्ञकस्तत्रैवकारव्यवच्छेद्यं स्पष्टयति—**नत्विति।** **तदप्रवृत्तिः**—स्वराप्रवृत्तिः। ननु सुद्युभ्यामित्यत्र दीर्घप्रवृत्तिसञ्चार एवासङ्गतः सम्प्रसारणशब्देन जातस्यैव सम्प्रसारणशब्देन ग्रहणादत आह—**अतदिति।**

अत्र पक्षे इत्युपादानम्भाष्यकारसिद्धान्तविरुद्धत्वेन तस्य पक्षस्य स्वानभिमतत्वसूचनाय अथ प्रत्ययस्य शब्दादेव परत्वान्नत्वर्थादिति शब्दस्य द्वारत्वकल्पना कृता। तथा च प्रियपञ्चन्शब्दे दोष इ.

---

वि० (१) "तितिप्रत्ययग्रहणङ्कर्तव्यम्" इति वार्तिकेनेति भावः।

द्यामिति रूपम् द्योशब्दस्यैवेति बोध्यम् ।। इति वान्ताः ।।

"षट्चतुर्भ्यश्च" (पा० सू० ७।१।५५) ।। बहुवचननिर्देशाद-र्थप्राधान्यं विवक्षितम् । अर्थाच्चामः परत्वं शब्दद्वारकम् । तेन तदन्त-विधौ सत्यपि परमचतुर्णामित्यादावेव भवति, न तु बहुव्रीहौ । तदेत-द्ध्वनयति-गौणत्वे तु नुट् नेष्यते इत्यादिना । द्वित्वामिति । "अचो रहाभ्याम्" (पा० सू० १।४।४६) इत्यनेन । रान्ताः ।।

कमला लक्ष्मीः ।। लान्ताः ।।

---

शब्दद्वारकमिति । न चैवं तद्वाचकशब्दात्परत्वमेवार्थात्परत्वमित्यायातम् । ततश्च प्रियपञ्चन् आमित्यत्रापि तद्वाचकपञ्चन्शब्दात्परत्वमस्त्येवेति दोषस्तदवस्थ इति वाच्यम् । एतत्सामर्थ्येन प्रधानीभूतषडर्थवाचकशब्दात्परत्वमस्त्येवेतिदोषस्तदवस्थ-इति वाच्यम् । एतत्सामर्थ्येन प्रधानीभूतषडर्थवाचकशब्दात्परत्वं विवक्षितमित्यभि-मानात् ।

इदं प्राचामनुरोधेन । द्विवचननिर्देशे गौरवात्समाहारेण सर्वत्र सूत्रेषु निर्देशादर्श-नाच्च षट्सञ्ज्ञकानां बहुत्वाच्च बहुवचनोपपत्तेः । किं च "न षट्स्वस्रादिभ्य" (पा० सू०४।१।१०) इत्यादौ शब्दबाहुल्याभिप्रायेण बहुवचनस्येव 'तिसृभ्यो जस' इत्यादौ प्रयोगबाहुल्याभिप्रायेण तद्वच्चेहापि बहुवचनं वक्तुं युक्तम् । किं च "नामि" (पा० सू०६।४।३) इति सूत्रे भाष्ये 'आमि' इत्येव सूत्रमस्तु । न च नित्यत्वात्पूर्वं दीर्घे ह्रस्वाश्रयो नुट् न स्यात् । ह्रस्वान्ताद् नुडित्येतत्सामर्थ्येन भूतपूर्वगत्या ह्रस्वान्तत्व-मादाय तत्प्रवृत्तेः । न च नृणामित्यत्र चारितार्थ्यम् । नैकमुदाहरणं(१) योगारम्भं प्रयोजयति । नृनद्याप(२) इत्येव ब्रूयात् । न च तिसृणामित्यत्र चारितार्थ्यम् । प-

त्याशङ्क्य निराचष्टे—नचैवमित्यादिना ।

इदम्—बहुवचननिर्देशेनार्थविशेषस्य कल्पनम् । ननु द्विवचननिर्देशे गौरवात्समाहारद्वन्द्वेनक-वचननिर्देश एवास्त्वित्यत आह—समाहारेणेति । ननु सर्वत्र तथा निर्देशाभावेऽपि "स्तोश्चुना श्चुः" इतिसूत्रे तथानिर्देशो दृश्यत एवेत्यत आह—षट्संज्ञकानामिति । ननु सञ्ज्ञिनाम्बहुत्वेऽप्ये-कवचनं "वृद्धिर्यस्याचामादिः" इत्यादौ दृश्यत एवेत्यत आह—किञ्चेति । ननु बहुवचनस्योक्त-रीत्योपपत्तावपि गौणस्य वारणान्न स्यादितिचेत्, न । विहितविशेषणाश्रयणेन तस्यापि सम्भवात् । तद्वच्चेति । बहुवचनवच्चेत्यर्थः । अत्र—"इम" इति सूत्रे ।

वि० (१) एकमुदाहरणं सामान्यरूपेण योगारम्भे प्रयोजकं न भवतीति तदर्थः । विशेषरूपेण निर्देशेऽपि तदुदाहरणोपपत्तिसम्भवात्सामान्यरूपेण निर्देशो व्यर्थ एवेति तदाशयः ।

प्र० (२) नृनद्याप इत्येव ब्रूयादिति । ननु "ह्रस्वनद्याप" इति सूत्रकल्पे नृशब्दादाचारक्वि-बन्तात्कर्तरि क्विपि तुकि तस्मादामि नृत् आम् इत्यत्र ह्रस्वान्तत्वाभावात् नुण् न भवति, 'नृनद्याप' इति न्यासे तु स्यादेव । तथा नृशब्दस्य ऋशब्देन समासे तत आमि सूत्रसत्वे नुड न स्यात् । न्यास-कल्पे च स्यादिति फलभेद इति चेन्न । नृनद्याप इति न्यासे तात्पर्यात्, तथा च तपरत्वसामर्थ्यात् ह्र-स्वऋकारान्तस्यैव ग्रहणं न तु दीर्घान्तस्य, तुगन्तस्य वा नृशब्दस्येत्यदोषात् ।

**"मो नो धातोः"** (पा०सू०८।२।६४) ॥ **पदान्त इति ।** झलीति तु यद्यपि प्राचाऽनुवर्तितम् , तथाऽपि काशिकादावभावान्निष्फलत्वाच्चोपेक्ष्यम् ।

**"किमः कः"** (पा०सू०७।२।१०३) ॥ ननु इम इत्येव सूच्यताम् । त्यदादीनामिमोऽः स्यादिति व्याख्यास्यते। किंशब्दश्च द्वेः प्राक् पठिष्यते । 'नानर्थक' इति निषेधादारम्भसामर्थ्याच्चालोन्त्यविधिर्न भविष्यति, तत् किं कादेशेनेत्याशङ्क्याह-**अकच्सहितस्यापीति** । टेरत्वे कक इति

---

डित्यत्र(१) त्रेरित्यनुवृत्त्या सिद्धेः' इत्युक्तम् । गौणेऽस्याप्रवृत्तौ प्रियचतसृणामित्यत्र चारितार्थ्येन भाष्यासङ्गतेः। 'ऋन्नद्याप' इति न्यासे तु न भाष्यतात्पर्यं त्रिशब्दानुवृत्तिपरभाष्यासङ्गतेः । नैकमुदाहरणमित्यस्यासङ्गतेश्च । गौणे नुटोऽप्रवृत्तिसाधकभाष्यान्तराभावाच्च । न चैवं पद्मां दतामित्यादौ भूतपूर्वगत्याश्रयणेऽतिप्रसङ्गः । ह्रस्वत्वं नाम मात्राकालिकाच्त्वम् । तत्र सामर्थ्याद् विशेषणभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणं न तु विशेष्यभूताच्त्वांशेऽपीत्यदोषादिति दिक् ।

इम इति । अत्र त्यदादीनाम इत्यनुवर्तते तदाह—त्यदादीनामिति । अत एव सिद्धान्ते उपसर्जनेनेति भावः । द्वेः प्रागिति । तेन द्विपर्यन्तानां त्यदादित्वेऽपि न दोषः । 'किंसर्वनामबहुभ्य' इत्यत्र किंग्रहणं न कार्यमिति भावः । न चेमौ इत्यत्राप्यापत्तिः । 'अङ्गकार्यं कृते' इति निषेधात् । **आरम्भसामर्थ्याच्चेति ।** "त्यदादीनामः" (पा०सू०७।२।१०२) इत्यनेनैवान्त्यादेशे सिद्धे इम इत्यारम्भसामर्थ्यादित्यर्थः । **कक इति स्यादिति** । मम तु 'तन्मध्यपतित' इति न्यायेन साकच्कस्य किंशब्दत्वात्सिद्धम् । निर्दिश्यमानमस्येति परिभाषा तु नात्र प्रवर्तते, कादे-

अनुवर्तत इति । अत एव क्विबन्तनियमादावतिप्रसङ्गो न । नन्वनुवृत्तिकल्पनाप्रयुक्तगौरवमत आह-अत एवेति । तदनुवृत्तिसत्त्वादेवेत्यर्थः। एवङ्कल्पनायां लाघवमप्यस्तीत्याशयेनाह—किं सर्वनामेति। ननु किम्शब्दस्य द्वेः प्राक् पाठस्य कारणकथनमसङ्गतम्, "त्यदादीनि च" इत्यत्र व्यभिचारात्, इति चेन्न । सर्वत्र तादृशनियमाभावेऽपि "त्यदादीनाम" इति सूत्रे त्यदादिपदस्य द्विपर्यन्तबाधकत्वमेव भाष्यकारेष्टयाऽस्तीत्यर्थाधिकारानुरोधादत्रापि तथाभविष्यतीत्यतस्तथापाठकल्पनमुचितमित्याशयात् । इमाविति । विभक्त्या सहैकादेशेऽपि पूर्वान्तवद्भावेन विभक्तिपरत्वमस्तीति भावः । अङ्गकार्यमत्रात्वम्मत्वञ्च बोध्यम् । न च "अचः परस्मिन्" इत्येकादेशस्य स्थानिवद्भावेन न विभक्तिपरत्वमिम् इत्यस्येति वाच्यम्, विभक्तावित्यस्याङ्गविशेषणत्वात् । नानर्थकपरिभाषाया भाष्यकृता प्रत्याख्यानादाह-मूले—आरम्भेति । इदमुपलक्षणम्, लक्षणप्रतिपदोक्तपरिभाषयापि तत्रातिप्रसङ्गवारणसम्भवात् । मम तु "किमः क" इति समुदायरूपादेशविधानसामर्थ्यादित्यर्थः । अत्र किम्शब्दोपादानसाम-

---

वि० (१) नच त्रिशब्दादाचारक्विबन्तात्कर्तरि क्विपि त्रितामित्यादौ नुडापत्तिः, षट्चतुःसाहचर्येण तकारान्तस्यैव त्रिशब्दस्य ग्रहणेनादोषात् । नच त्रिशब्दस्येकारेण समासे दीर्घे तत आमि त्रि आमीति स्थिते ह्रस्वग्रहणे न भवति, त्रिग्रहणे पूर्वान्तवद्भावेन स्यादिति फलभेद इति वाच्यम् । पञ्चमीसमासमाश्रित्य ह्रस्वग्रहणेऽपि नुटः प्रवृत्तेः फलैक्यात्।

स्यात्। "कुतिहोः" (पा० सू० ७।२।१०४) इत्याद्यर्थं च किम इत्यवश्यं वक्तव्यमिति भावः। नन्वेवं गणकार्यत्वाभावादुपसर्जनत्वेऽपि स्यात्। मैवम्। त्यदादीनामित्यनुवर्त्य वचनविपरिणामेन त्यदादेः किम इति व्याख्यानात्। अनुवृत्तिसामर्थ्याच्चेह सूत्रे 'द्विपर्यन्ता' इति नियमस्य

---

शविधानसामर्थ्यात्(१)। न च सुबन्तात्तद्धितोत्पत्त्या विभक्त्युत्पत्त्यनन्तरं परत्वात्कादेशे कृतेऽकचि कक इत्येव स्यादिति वाच्यम्। प्रातिपदिकादित्यधिकारात्सुपः शब्देन निमित्तत्वेनानाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाऽकचोऽन्तरङ्गत्वाद्विति भावः। किम इत्यवश्यमिति। "कुतिहोः" (पा०सू०७।२।१०५) "क्वाति" (पा०सू०७।२।१०५) इत्ययादेशे कद्वयश्रवणापत्तिः। उतिहोरिति न्यासे उकारस्यान्त्यादेशत्वापत्तिरेतदर्थं 'नानर्थक' इत्यारम्भे गौरवम्। अङ्गवृत्तपरिभाषया क्वेत्यत्र गुणस्य वारणे च क्लेश इति भावः। किमो द्वेरनन्तरं पाठेऽपि दोषाभावमाह—अनु-

---

र्थ्यादिति तु नोक्तम्, तस्योत्तरार्थत्वात्। ननु यदर्थमयम्प्रयासस्तस्य प्रकारान्तरेण दुर्वारतया प्रयासवैयर्थ्यमित्याशङ्कां निराचष्टे—नचेति। सुबन्तादिति। "कुत्सित" इतिसूत्रस्थभाष्यात्तथालाभादिति भावः। यद्यपि जायमानस्तद्धित उक्तरीत्या सुबन्ताद्भवति तथापि शब्दतस्तथा नोक्तमित्याशयेन समाधत्ते—प्रातिपादिकादित्यादिना। अनाश्रयणादिति। सुप इत्यर्थसम्भव इति शेषः। ननूक्तरीत्या तस्य लाभः स्यादेवेत्यत आह—अङ्गसंज्ञेति। उत्तरार्थत्वमुपपादयति—कुतिहोरिति। उतिहोरिति। अत्र उ इति लुप्तप्रथमान्तम्, तादौ हादौ चेम उः स्यादिति प्रथमस्य अतिचेम उः स्यदिति द्वितीयस्यार्थो भविष्यति स च न युक्त इत्याह—उकारस्येति। गुणस्य-"ओर्गुणः" इति गुणस्य। च क्लेश—इत्यत्र यश्चकारस्तस्य क्लेशपदोत्तरं योजना कार्या। अङ्गवृत्तपरिभाषाया भाष्यकृता लक्ष्यसिध्यर्थमनाश्रि-

---

प्र० (१) अयं भावः। अकज्विशिष्टस्य निर्दिश्यमानत्वं नास्ति भिन्धकीत्यत्राकचि कृते धित्वं न प्राप्नोति इत्याशङ्क्य 'अन्तरङ्गत्वाद्वित्वेऽकज्' इति भाष्योक्तेस्तत्स्थलाभात्। तथा च प्रकृते निर्दिश्यमानपरिभाषोपस्थितौ कर्किशब्दस्य कादेशो न सिध्येदत आह—निर्दिश्यमानस्येति परिभाषा तु नात्र प्रवर्तते, कादेशविधानसामर्थ्यादिति। कैयटेन तु तत्परिभाषोपस्थितावपि सूत्रावृत्त्याश्रयणेन साकच्कस्यादेशसिद्धिरुक्ता। न चैवं साकच्कस्य निर्दिश्यमानत्वाभावे "अनाप्यकः" (पा०सू०७।२।११२) इत्यत्र अक इति पर्युदासो विफलः स्यादिति वाच्यम्। अस्मादेव ज्ञापनात्साकच्कापहारकादेशविषये निर्दिश्यमानत्वं नास्ति, साकच्कानपहारकविषये तु निर्दिश्यमानत्वमस्तीत्यङ्गीकारात्। अत एव सर्वकशब्दाद्दाप्रत्यये "सर्वस्य सोऽन्यतरस्यां दि" (पा० सू० ५।३।६) इति वैकल्पिकः सादेशो न भवति, अनेषक इत्यादौ सत्वादि च सिध्यतीति व्यवस्थोपपद्यते।

वस्तुतस्तु कर्किशब्देऽकचः किंशब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तन्मध्यपतितत्वसत्वान्निर्दिश्यमानत्वेनादेशः स्यादेव। भिन्धकीत्यत्र तु अकचस्तिङन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तिङन्तवृत्तिधर्मारोपेऽपि द्वित्वारोपे मानाभावेन निर्दिश्यमानस्य द्वेरभावात् 'अकचि कृते धित्वं न प्राप्नोति' इति शङ्का युक्तैव। एवं च तन्मूलकोक्तनिर्दिश्यमानत्वाभावकल्पना, 'अक' इति पर्युदासवैयर्थ्यापादनपूर्वकावान्तरकल्पना चायुक्तैव। सर्वकदेत्यत्रापि यथालक्षणं सादेशो भवत्येव। निर्दिश्यमानपरिभाषा तु नेह प्रवर्तते इति शब्दरत्नाशयस्तु परमकिंशब्दादकचि तस्य किंशब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वाभावेन तन्मध्यपतितन्यायाप्राप्त्या कादेशो न स्यादतः कादेशविधानसामर्थ्यात्तादृशाकचस्य निर्दिश्यमानपरिभाषया न व्यावृत्तिरिति।

त्यागात्। उत्सर्ग इति। तेन "तदोः सः सौ" (पा० सू० ७।२।१०६) इति सूत्रे ऽनन्त्ययोरिति किम्, हे स इति भाष्यम्, भो अच्युत इति च न विरुद्ध्यत इति भावः। नास्तीत्यत्र मूलं तु प्रचुरप्रयोगादर्शनमेव। यत्त्वाहुः—

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥ १॥

इति वचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादिति, तदापातत:। सन्निकृष्टादिशब्दानामिव इदमादीनामपि सम्बोध्यसमर्पकत्वे बाधकाभावात्। विप्रकृष्टस्यापि बुद्ध्या सन्निधापितस्य बहुशः सम्बोधनदर्शनाच्च। तथा च भट्टिः—

'हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स'। इति।

"अनाप्यकः" (पा० सू० ७।२।११२)॥ प्रत्याहार इति। न तु टाप्। विभक्ताविति विशेषणादिति भावः। अनभ्यासविकार इति। तेन "भृञामित्" (पा० सू० ७।४।७६) "अर्तिपिपर्त्योश्च" (पा० सू० ७।४।७७) इतीत्वेऽलोन्त्यविधिरस्त्येव बिभर्ति पिपर्ति। ननु स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्क्याह-नित्यत्वात् ङेः स्मै इति। कार्यं विधातुमिति। अपूर्वं बोधयितुमित्यर्थः। 'ईषदर्थे क्रिया योग'

---

वृत्तौ' इति। इति च न विरुद्ध्यत इति। यद्यप्ययं प्रयोगो निपातमादाय सिध्यति, तथापि "विभाषा भवत" (का०वा०) इति वार्त्तिकं न विरुध्यत इति तात्पर्यम्। विप्रकृष्टस्यापीति। परोक्षस्य चेत्यपि बोध्यम्। पिपर्त्योरिति। अयं निर्देश एवास्यांशस्य ज्ञापक इत्याहुः। अनादेशः स्यादिति। तत्र कृते सकृद्गतिन्यायेन पुनः स्मै न स्यादिति भावः। नित्यत्वादिति। लक्ष्यानुरोधेन बाधकाबाधितप्रसङ्गस्यैवात्र ग्रहणान्नाऽनादेशो नित्य इति भावः। अपूर्वं बोधयितुमिति। अज्ञातज्ञापनमेवोभयत्रापि विधानं, न तु प्रवर्तनाविषयत्वमित्यर्थः। न विधीयन्ते ना-

तत्वाद्भवता तस्या इहार्थङ्कल्पनायाङ्क्लेश इति भावः। पूर्वग्रन्थाविरोधायाह—किम इति। अयम्प्रयोगः-भो अच्युत इति प्रयोगः। वार्तिकमित्यस्य। "मतुवसोः" इतिसूत्रमित्यादिः। मूले—इदमस्त्वित्यादिः। अत्र विषयपदाध्याहारेण सन्निकृष्टं वस्त्विदमो विषय इत्यर्थः। एवमदस इत्यस्यापि अभिमुखीकरणेत्यादि। सम्यक् ज्ञापनं हि सम्बोधनविभक्त्यन्तशब्दप्रयोगस्य फलन्तच्च दूरदेशस्थत्वेऽपरोक्षत्वे चाचितमिति भावः। न्यूनताम्परिहर्तुमाह—परोक्षस्य चेति। अस्यांशस्य। अनभ्यासविकार इत्यंशस्य। नन्वनादेशात्तरम्भवतु स्मैभावस्ततो हलि लोपेनेष्टसिद्धिः स्यादत आह—तत्र कृत इति। ननु नित्यत्वमनित्यापेक्षया बलवत्त्वप्रयोजकमिह तु अनादेशस्य स्मैभावे कृतेऽपि प्राप्तिरित्युभयोर्नित्यत्वमिति नित्यत्वादित्यनुपपन्नमत आह—लक्ष्येति। प्रसङ्गस्य—कृताकृतप्रसङ्गस्य। अत्र—प्रकृतप्रयोगे। ज्ञापनमेवेति। एवकारेण इदमेव यत्र कथनन्तत्रैत्यस्यानादरो ध्वनितः। उ-

(१) इति श्लोके तु ईषदर्थादयो न विधीयन्ते, किं त्वनूद्यन्ते। तेन एनादेशो न। एतेन—

नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय।

इत्यपि व्याख्यातम्। भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात्॥ मान्ताः॥

**सुगाणिति**। "अनुनासिकस्य क्विझलोः" (पा० सू०६।४।१५) इति दीर्घः। न च तस्मिन् कर्तव्ये ऽल्लोपणिलोपयोः स्थानिवद्भावः शङ्क्यः। दीर्घविधौ तन्निषेधात्। क्वौ विधिं प्रति निषेधाच्चेति भावः। एतेन सुगणोश इति प्राचो ग्रन्थं गणयतेः क्विबिति व्याचक्षाणा उपेक्ष्या इति ध्वनयति। तदीयो ग्रन्थोऽपि समर्थनीय इत्याग्रहे तु इत्थं समर्थ्यताम्—सर्वलोपित्वेन किरन्निवाचरतीति क्विप्। क्विप्शब्दादाचारक्विबन्तात् कर्तरि क्विप् तेन विजित्यर्थः॥ णान्ताः॥

**उपधादीर्घ इति**॥ "सर्वनामस्थाने चासम्बुद्धौ" (पा०सू०६।४।८) इत्यनेन। **ङौ सम्बुद्धौ चेति**। प्राचामनुरोधेनेत्थं व्याख्यातम्।

---

ज्ञाता बोध्यन्ते। अनुवाद्यत्वेनेति। सखीवाक्यमिदम्। तत्र कृष्णे आरोपितभीरुत्वं भाविकामिव्यवहारसङ्गोपनायानुवाद्यत्वेनैव विवक्षितमिति भावः। नन्दनिदेशत इति—नन्दनीयनिदेशादित्यर्थकं बोध्यम्।

दीर्घविधाविति। "न पदान्त" (पा०सू०१।१।५८) सूत्रे सपादसप्ताध्यायीस्थदीर्घस्यापि ग्रहणमित्यर्थस्य "चिण्णमुलोः" (पा०सू०६।१।२३) इति सूत्रे भाष्ये ध्वनितत्वादिति भावः। उपेक्ष्या इति। दीर्घप्राप्तेरिति भावः।

---

यत्रापि कार्यं विधातुं कार्यान्तरं विधातुमित्यनयोर्नाग्रह इति। अत एव (२)'वन्यद्विपेनोन्मथिता त्वगस्य' 'अथैनमद्रेस्तनया शुशोच' इत्यस्योपपत्तिरिति भावः। ननु विधानस्य परित्यक्तत्वान्न विधीयन्त इत्यनुपपन्नमत आह—नाज्ञातेति। यत्तु नन्दस्य निदेशत इति तस्य यद्यस्य व्याख्यानन्तदसङ्गतम् चिरकालोकरहः केलीनान्तात्पर्यविषयत्वानुपपत्तेरत आह—सखीवाक्यमिति।

ननु "पूर्वत्रासिद्धे न स्था नेवत्" इत्याश्रयणेन दीर्घग्रहणस्यापि प्रत्याख्यानाद्दीर्घविधाविरयनुपपन्नमत आह—नपदान्तसूत्र इति। दीर्घस्यापीति। अपिना त्रैपादिकस्य परिग्रहः। ध्वनितत्वादिति। तत्र हि शंशमभ्यनेः अशंशाम अशंशामि शंशमम् शंशाममित्यत्र विकल्पेन दीर्घसिध्यर्थं "यङ्लोपे उपसंख्यानम्" इति वार्तिककृतोक्तम्, तदभिप्रायेणात्र णिश्चिण्णमुलपरो न तस्मिन्नङ्गमित्युक्त्वा लोपे कृते चिण्णमुलपरो भवतीत्याशंक्य स्थानिवद्भावान्नचिण्णमुल्परः। ननु च प्रतिषिध्यते स्थानिवद्भावः, दीर्घविधिम्प्रति स्थानिवदिति समाहितम्। अत्र "नपदान्त" सूत्रस्योपन्यासेन सपादसप्ताध्यायीस्थदीर्घस्यापि तेन दीर्घशब्देन ग्रहणम्भवतीति ध्वनितत्वादित्यर्थः। "वरे य·

---

वि० (१) 'इषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्'॥ इति श्लोके॥

वि० (२) रघुवंशे द्वितीयसर्गे सप्तत्रिंशः श्लोकः।

ङ्यन्तस्य सम्बुद्ध्यन्तस्य च पदस्येति षष्ठ्यन्ततया व्याख्यानं तूचितम्। एवं हि प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्तव्यः। पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह-न चेति। षाष्ठीमिति। "वाह ऊठ्" (पा०सू०६।४।१३२) इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः। इत्यसिद्धत्वादिति। नियमसूत्राणां विधिरूपेण प्रवृत्तिः सामान्यशास्त्रतात्पर्यसङ्कोचकता चेति पक्षस्य

---

व्याख्यानं त्विति। तुनाऽरुचिर्बोधिता। सप्तम्यन्तपाठेऽपि "न लुमता" (पा०सू०१।१।६३) इति निषेधानित्यत्वेन "वा नपुंसकानाम्" (पा०सू०७।२।७९) इत्यस्य सिद्धिरिति लाघवमस्तीति। औचित्यमेव दर्शयति-एवं हीति। सामान्यशास्त्रेति। प्राप्तस्य पुनर्विधानसामर्थ्येन सामान्यशास्त्रस्य सङ्कोचस्तदितरपरतारूप इत्यर्थः। सङ्कोचश्च नलोपविधौ "पूर्वत्रासिद्धम्" (पा०सू०८।४।१) इत्यस्यानुपस्थितिरूपः। "अर्थवत्" (पा०सू०१।२।४५) सूत्रे चार्थवत्पदेऽनर्थवत्समुदायाग्रहणरूपः। एवं चास्य विधित्वं स्पष्टम्। इदमेव च नियमस्य विध्यपेक्षया गुरुत्वम्। निषेधवादिनोऽप्यस्यावश्यकत्वम्। अन्यथा विकल्पापत्तेः। सामान्यशास्त्रसङ्कोचे चान्यत्र तदभावस्याप्यर्थतः सिद्धेरर्थसिद्धं तमादाय नियमशास्त्रेषु प्रतिषेधत्वव्यवहारोऽपि। "कृत्तद्धित" (पा०सू०

लोपस्वरवर्जन्द्विर्वचनादीनि न वक्तव्यानि" इत्यत्र वर्ज्यकोको(?)दीर्घस्यापि तस्य वाक्यस्योपलक्षणतया सङ्ग्रहः कार्यः।

पाठेऽपीति। अस्य लाघवमस्तीत्यत्रान्वयः। तथाच षष्ठ्यन्ततया व्याख्यानपक्षे निषेधसामर्थ्यं यद्यपि नाश्रणीयन्तथापि "वा नपुंसकानाम्" इति वचनारम्भः कार्य इति गौरवम्, सप्तम्यन्ततया व्याख्याने तु निषेधवचनारम्भेण "न लुमता" इत्यस्याऽनित्यत्वमात्रकल्प्यन्तावतैव "न ङिसम्बुद्ध्योः" इति वचनस्य प्रवृत्तिर्भविष्यति, "वा नपुंसकानाम्" इति नापूर्वमिति लाघवात्सप्तम्यन्ततया व्याख्यानमुचिततरमिति भावः। प्राप्तस्य "नलोपः प्रातिपदिकान्तस्य" इतिसूत्रेऽनुवर्तमानं "पूर्वत्रासिद्धम्" इत्यनेन सुबादिविधौ प्राप्तस्यासिद्धत्वस्य संकोचस्य स्वरूपमाह—तदितरपरतेति। तथाच "पूर्वत्रासिद्धम्" इति नलोपातिरिक्तविषयकमिति लब्धम्। एवञ्च यथाफलितन्तथाह—सङ्कोचश्चेत्यादिना। दृष्टान्तप्रदर्शनेनोक्तार्थदार्ढ्यायान्यत्रापि सामान्यशास्त्रतात्पर्यसङ्कोचमाह—अर्थवत्सूत्रेति। एवञ्च—"पूर्वत्रासिद्धम्" इत्यस्य नलोपाविषयत्वसिद्धौ च। अस्य—"नलोपः सुब्" इतिसूत्रस्य। इदमेव च—नियमशास्त्रस्य सामान्यशास्त्रतात्पर्यसङ्कोचकत्वरूपमेवच। न केवलन्नियमशास्त्राणां विधायकत्ववादिमत एवैषा कल्पना; किन्तु तेषान्निषेधरूपेण प्रवृत्तिरिति वादिमतेऽपीत्याह—निषेधवादीति। अस्य-इतरसङ्कोचस्य। अन्यथा—सामान्यशास्त्रस्य निषेधविषयविषयकत्वस्यापि कल्पने। विकल्पापत्तेरिति। षोडशिग्रहणाग्रहणयोरिव विकल्पापत्तेरित्यर्थः। ननु यदि नियमशास्त्राणां विधिरूपेण प्रवृत्तिस्तदा "उभयप्राप्तौ कर्मणि" इतिसूत्रे "षष्ठ्याः प्रतिषेधः" "क्तादिप्रयोगेऽप्रतिषेधः" इति वार्तिककारीयप्रतिषेधत्वकथनासङ्गतिरत आह—सामान्याशास्त्रेत्यादि। अन्यत्र—कर्मातिरिक्ते कर्तरि। तदभावस्य—षष्ठ्यभावस्य, प्रकृतसूत्रविषये तु सुबादिचतुष्कादिभ्यो ऽन्यत्रेति कल्प्यम्। तम्—निषेधम्। एवञ्च तत्रतत्र प्रतिषेधत्वव्यवहारः फलितार्थकथनपरो नतु शब्दार्थपर इति भावः। नन्वेवं समासग्रहणकृतनियमेन सामान्यशास्त्रस्यार्थवत्सूत्रस्यैव सङ्कोचः स्यान्नतु कृद्ग्रहणस्येति मूलकेनोपदंशमित्यादौ 'कृद्ग्रहणे गतिकारक' इति परिभाषया दोषः स्यादेवेत्यत आह—कृत्तद्धितेतीति।

"द्युद्भ्यो लुङि" (पा०सू०१।३।९१) इति सूत्रे भाष्यकृता ध्वनितत्वादिति

---

१।२।४६) इतिसूत्रस्थसमासग्रहणकृतनियमेन बाध्यसामान्यचिन्तया कृदंशस्यापि सङ्कोच इति मूलकेनोपदंशमित्यादौ न कृदन्तत्वप्रयुक्तं प्रातिपदिकत्वम्। 'पञ्च पञ्च नखा भक्ष्या' इति शास्त्रेणापि प्रापकप्रमाणरागप्राप्तभक्षणस्य तदितराविषयत्वरूपसंकोचकल्पनम्। तेनान्येषां भक्षणाभावो गम्यते। तद्भक्षणे प्रायश्चित्तं च गम्यते (१) "पतिः समास एव" (पा० सू० १।४।९) इत्यादौ एवकारो घिसंज्ञाशास्त्रस्य समासाघटकपतिशब्दाविषयकत्वरूपसंकोचस्य स्फुटं द्योतनाय। पतिघटितसमासान्यसमासाविषयकत्वरूपसंकोचो मा भूदिति। अन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम्। द्युद्भ्यो लुङीति। "द्युद्भ्यो लुङि" (पा०सू० १।३।९१) इति सूत्रमुपक्रम्य "अनुपरा(२)भ्याम्" (पा०सू० १।३।७९) इति सूत्र इत्यर्थः। पञ्च

---

बाध्येति। लक्ष्यानुसारादित्यादिः। नायम्प्रकारः पाणिनीयनियमशास्त्रविषय एव, किन्तु स्मृतावपीत्याह—पञ्चपञ्चेति। प्रमाणरागेति। प्रमाणपदान्तस्य रागपदेन कर्मधारयः। तदितरेति। शशकादिपञ्चनखेतरपञ्चनखकर्मकत्वाभावरूप इत्यर्थः। नन्वेवं "पतिः समास एव" इति सूत्रे एवकार विनापीष्टसिद्धावेवकारवैयर्थ्यमत आह—पतिरिति। स्फुटमिति। समासपदोत्तरमेवकारोपादानेन यत्रैवकारस्ततोऽन्यत्र नियम इति सामान्यतः क्लृप्तो यो व्यवहारस्तद्विषयतायाः सत्वेनेष्टार्थसिद्धिः स्फुटेति भावः। तान्त्रिकव्यवहारस्थाप्युपपत्तिमाह—अन्ययोगेति। अत्र तुना प्रकारान्तरेण तस्याशुक्तत्वमेवेति ध्वनितम्। "द्युद्भ्यो लुङि" इतिसूत्रस्याव्याख्यानादाह—द्युद्भ्य इति। तत्रहि—"अनुपराभ्याम्" इतिसूत्रस्य प्रयोजनकथनावसरे "स्वरितञितः" इत्यनेन परस्मैपदस्य प्रतिषेधात्कृञादिभ्य नेन परस्मैपदं विधीयते इत्युक्त्वा यद्यनेन परस्मैपदं विधीयते तर्हि आत्मनेपदस्य प्रतिषेधो वक्तव्य इति पूर्वपक्षे 'नवा द्युतादिभ्या वाचवचनात् यदयं द्युतादिभ्या वावचनङ्करोति तज्ज्ञापयत्याचार्यो न 'परस्मैपदविषयं आत्मनेपदम्भवति' इत्युक्त्वा यद्वा यथा कर्त्रभिप्राये क्रियाफले आत्मनेपदेन परस्मैपदं बाध्यते, एवम्परस्मैपदेनाप्यात्मनेपदम्बाधिष्यत इति, कृञादिभ्य आत्मनेपदस्य प्रतिषेधो न वाच्य" इत्युक्तम्। यदि नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिः स्यात्तदा निषेधस्य शाब्दत्वाद्वाच्यत इत्युक्तिरसङ्गता स्यात्, नियमस्थले प्रतिषेधव्यवहारो गम्यमानार्थमादाय न तु शाब्दार्थमादायेत्यत्र भाष्यमपि प्रमाणमित्याह—पञ्च पञ्चेति। नच पञ्च पञ्चेत्यस्य परिसङ्ख्योदाहरणत्वात्कथमियम्

---

(प्र०) (१) प्रायश्चित्तं च गम्यत इति। न च शशकाद्यतिरिक्तपञ्चनखस्य भक्षणे प्रायश्चित्तोपपत्तावपि शशकभक्षणस्य शब्देन विधानात् तदभक्षणे प्रत्ययापत्त्याऽवश्यानुष्ठेयत्वापत्तिः, अश्वरशनाग्रहणे मन्त्रोच्चारणस्येवेति वाच्यम्। प्रापकप्रमाणस्य यत्र नियतत्वं तत्रावश्यानुष्ठेयत्वं, यत्र तु न प्रापकस्य नियतत्वं, तत्र नावश्यानुष्ठेयत्वं यथा व्रीहीनवहन्ति इति नियमविधौ पुरोडाशविधिरूपं प्रापकप्रमाणं नियतम्, 'इमामगृभ्णन्रशनामृतस्य' इतिशेषिपरिसंख्यायां मन्त्रलिङ्गरूपं प्रापकं नियतमिति तदनुष्ठानमावश्यकम्। शशकादिभक्षणप्रापकं रागरूपमानं तु न नियतं, दोषदर्शनादिना रागस्य निवृत्तेः। 'पञ्च पञ्चनखा भक्ष्या' इति विधिस्तु रागप्राप्तभक्षणेऽभ्यनुज्ञामात्रं करोति न तु स्वयमेव विधत्ते। भक्षणस्य विधिप्रवृत्तेः प्रागेव रागप्राप्तत्वात्। अभ्यनुज्ञाविधेश्च स्वविषयस्य बलवदनिष्टाननुबन्धित्वमात्रबोधकत्वं, न तु स्वविषये प्रवृत्तिसिद्धये तस्येष्टसाधनत्वबोधकत्वमपीति न तस्य धर्मत्वं, तथा च रागरहितानां तत्राऽप्रवृत्तावपि तदननुष्ठानप्रयुक्तप्रत्यवायापत्तिर्न तेषामिति बोध्यम्। एतेन 'ऋतौ भार्यामुपेयात्' इत्यादिविधिमूलकविवाहाद्यावश्यकत्वादिकल्पनाऽपि प्रत्युक्ता।

वि० (२) "अनुपराभ्याम्" (पा० सू० १।३।७९) इत्यनेन कर्त्रभिप्राये परस्मैपदस्य विधा-

भावः । निषेधरूपेण प्रवृत्तिरिति पक्षे तु "पूर्वत्रासिद्धम्" (पा० सू० ८।४।१) इत्यनेनेति बोध्यम् । सुब्विधिमुदाहरति—आन्वामित्यादिना । स्वरविधौ तु पञ्चार्मम् । "दिक्संख्ये संज्ञायाम्" (पा० सू० २।१।५०) इति समासे नलोपे कृते अव-

---

पञ्च नखा भक्ष्या इत्यत्र भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते इति ग्रन्थेन पस्पशायां च भाष्ये स्पष्टमेतत् । भक्ष्यनियमे प्राप्तभक्षस्य पुनर्विधाने इत्यर्थः । निषेधरूपेणेति । सुबादिपदस्य स्वव्यतिरिक्तविधौ लक्षणया भवतीत्यस्य च न भवतीत्यर्थे लक्षणयेति भावः । निषेधश्च नलोपविधावनुवर्तमानपूर्वत्रासिद्धत्वस्य । अत एवात्र स्वार्थहानि-प्राप्तबाधपरार्थकल्पनारूपदोषत्रयं मीमांसकैरुच्यते, परिसंख्यापदेन चायं व्यवह्रियते इति बोध्यम् । इति पक्षे त्विति । अनेनारुचिर्बोधिता । तद्बीजं तु लक्ष(१)णायां गौरवं फलाभावश्च, तदभावे लक्षणाया अनौचित्यं चेति । इति समासे इति । इत्यनुवर्तमाने "तद्धितार्थ" (पा० सू० २।१।५१) इति समासे इत्यर्थः । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति तु नात्र । तस्य स्वरोद्देश्यकविधावेव प्रवृत्तेः । "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" (पा० सू० ६।२।१४२) इति सूत्रे देवताद्वन्द्वे उत्तरपदप्रकृतिस्वरनिषेधके पृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात् । अत एव "अ-

---

स्त्व्यवहारः, परिसङ्ख्यातो नियमेऽस्ति विशेषः पाक्षिकप्राप्तिकांशपरिपूरणफलो नियमः, परिसङ्ख्या तु अन्यनिवृत्तिफलेति वाच्यम्, नियमेऽप्यप्राप्तांशपरिपूरणेनार्थिकान्यनिवृत्तेः सत्त्वेनाभेदमाश्रित्य परिसङ्ख्याविषयेऽप्यत्र शास्त्रे नियमत्वव्यवहारस्य कृतत्वात् । प्रकृते नियमश्चात्मनेपदादिविधायकादीनाम्बोध्यः । निषेधरूपेण प्रवृत्तिप्रकारन्दर्शयति—सुबादिति ।

नन्वत्र निषेध्याभावादेतदयुक्तमत आह—निषेधश्चेति । अत एव—निषेधरूपेण प्रवृत्तौ लक्षणाङ्गीकारादेव । अत्रेति । अस्य मीमांसकैरुच्यत इत्यत्रान्वयः । अत्रेत्यस्य परिसङ्ख्यायामित्यर्थः । अयं नियमो यद्यपि मीमांसकमते भेदस्तथाप्युक्तभाष्यादस्मच्छास्त्रे नियमोऽपि तादृश एवेति परिसङ्ख्याविषयेऽपि नियमत्वव्यवहारः । ननु निषेधरूपेण नियमशास्त्रस्य प्रवृत्तिरितिपक्षे तु कथमुभयोरभेदलाभ इति चेच्छृणु, यथाश्रुतशब्दात्प्रतीयमानेऽर्थे तात्पर्याभावात्तात्पर्यतस्त्यागः । अन्यार्थे तात्पर्यकल्पनेन तात्पर्यतः परार्थकल्पना प्राप्तस्यार्थस्य बाधश्चेति । लक्षणायाम्—उभयत्र लक्षणायाम् । फलभावः—विधिरूपेण प्रवृत्तिस्वीकारेणोपपत्तौ पक्षान्तरं स्वीकृत्य लक्षणाकल्पने फलाभावः । तदभावे—फलस्याभावे, रूढ्यन्यलक्षणायाः फलवत्त्वनियमादिति भावः । ननु लोपस्यासिद्धत्वेऽपि व्यञ्जनस्याविद्यमानवद्भावेनावर्णान्तत्वमस्त्येवेत्यत आह—स्वरविधाविति । स्वरोद्देश्यविधित्वञ्च स्वरविशेषानुवादेन विधित्वम् । तत्र मानमाह—नोत्तरपद इति । अत्रानुदात्ताविति कथनेन स्वरोद्देश्यकविधित्वं स्पष्टमेव । व्यञ्जनस्याविद्यमानवद्भावाभावे पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । स्वरोद्देश्यकविधावेव तस्य प्रवृत्तौ गमकान्तरमाह—अत एवेति । तत्रैव तत्प्रवृत्ते

---

नेऽपि "स्वरितञितः" (पा० सू० १।३।७२) इत्यनेनात्मनेपदं कस्मान्नेति शङ्कायाम् "परस्मैपदेनात्मनेपदं बाधिष्यते" इत्युक्तं भाष्ये । निषेधमुखेन प्रवृत्तौ तु "अनुपराभ्याम्" (पा०सू० १।३।७९) इत्यस्य नियमार्थतायां परस्मैपदविधानाभावेन "परस्मैपदेनात्मनेपदं बाधिष्यते" इत्युक्तिरसङ्गतैव स्यात् ।

वि० (१) लक्षणायां गौरवमिति । तथाहि स्वार्थे तात्पर्याभावात्तात्पर्यतस्त्यागः, पूर्वत्र सङ्कोच रूपान्यार्थे तात्पर्याङ्गीकारेण तात्पर्यतः परार्थकल्पना, प्राप्तबाधश्चेति गौरवमिति भावः ।

णान्तं पूर्वपदं जातमिति "अमे चावर्णं द्व्यच्त्र्यच्" (पा० सू० ६।२।९०) इति पूर्वपदाद्युदात्तत्वं प्राप्तं, नलोपस्यासिद्धत्वान्न भवति। सञ्ज्ञाविधौ पञ्चेत्यत्र नलोपे कृतेऽपीत्यादिना स्त्रीप्रत्ययेषु वक्ष्यति। कृति तुग्विधौ तु—वृत्रहभ्याम्। "ह्रस्वस्य पिति" (पा० सू० ६।१।७१) इति तुग् न। कृति किम्, वृत्रहच्छत्रम्। "छे च" (पा० सू० ६।१।७३) इति तुक् स्यादेव। प्रतिदीव्यति। "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" (उ० सू०) इति कनिन्। "हलि च" (पा० सू० ८।२।७७) इति दीर्घः। यत्तु "उपधायां च" (पा० सू० ८।२।७८) इत्युपन्यस्तम्। तन्न। दिवेर्वकारस्यानुपधात्वात्।

"इन्हन्" (पा०सू० ६।४।१२)॥ उपधाया इति। उपधादीर्घस्यैवायं नियमः। तेन वृत्रहायत इत्यत्र "अकृत्सार्वधातुकयोः" (पा० सू० ७।४।२५) इति दीर्घो भवत्येव। तथा वृत्रहणी इत्यत्र "अनु-

चः कर्तृयकि" (पा० सू० ६।१।११९) "शतुरनुमो नद्यजादी" (पा० सू० ६।१।१७३) इत्यादौ 'अचः' इति 'अजादी' इत्यादि च चरितार्थम्। अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वाद् "अन्तोऽवत्याः" (पा०सू० ६।१।२२०) इति स्वरो न। उदश्वित्वानित्यत्र "ह्रस्वनुड्भ्याम्" (पा० सू० ६।१।१७६) इति मतुबुदात्तत्वं च नेत्याकरः। इदं "समासस्य" (पा० सू० ६।१।२२३) इति सूत्रे भाष्ये स्पष्टम्। इदमेवाभिसंधाय "यतोऽनावः" (पा० सू० ६।१।२१३) इत्येतन्निषेधमूलकं, 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' (प०) इति परिभाषान्तरं भाष्ये तत्रैव स्पष्टमुक्तम्। अनुपधात्वादिति। धातोरुपधाभूतरेफवकारयोर्हल्परयोरिति तदर्थादिति भावः। प्रतिदिवन्शब्दादाचारक्विप्यपि "अनुनासिकस्य" (पा० सू० ६।४।१९) इति दीर्घे इदं रूपं दुर्लभम्। वस्तुतो हलन्तेभ्य आचारक्विपोऽनभिधानमन्यत्रोक्तम्।

तथेति। यथोपधाग्रहणादकृदिति दीर्घाव्यावृत्तिस्तथा सर्वनामस्थानग्रहणासम्ब-

रेवेत्यर्थः। अचः कर्तृयकि—अजन्तानामित्यर्थः। स्वरकर्मकविधावप्यविद्यमानवद्भावेऽज्ग्रहणवैयर्थ्यं स्पष्टमेव। अत एव—उक्तोऽर्थः। अस्याकर इत्यत्रान्वयः। इदमिति। प्रागुक्तमित्यर्थः। इदमेव—"स्वरविधौ" इति परिभाषायाः स्वरोद्देश्यकविधौ प्रवर्तनमेव। तत्रैव—"समासस्य" इतिसूत्रभाष्य एव, परिभाषान्तरस्य प्रयोजनन्तु राजदृषदित्यादि।

ननु प्रतिदीव्न इत्यत्रानुपधात्वादिति कथनमसङ्गतन्तस्योपधात्वस्य स्पष्टत्वादित्यत आह—धातोरिति। एतेन मूलेऽनुपधात्वादित्यस्य धातोरित्यादिः सूचितः। यत्तु प्रतिदिवन्शब्दादाचारक्विबन्तात्कर्तरि यत्र क्विप् तत्पर एवायङ्ग्रन्थ इति कश्चित्। तन्नेत्याह—प्रतिदिवन्नित्यादि। अन्यत्र—"ह्रस्वनद्याप" इति सूत्रस्थविवरणे, तत्र सूत्रभाष्ये "कासप्रत्ययात्" इति विहितस्यामो "ह्रस्वनद्याप" इति सूत्रे ग्रहणमाशङ्क्याकारेणानुबन्धेनास्यामः सानुबन्धकत्वात्समाषायाकारोऽनुबन्धो न कार्यः। ननु तदभावे मस्येत्वापत्तिः फलाभावादित्सञ्ज्ञा न भविष्यतीति कथिते मिदचोऽन्त्यात्परत्वप्रयोजनम्भविष्यतीत्याशङ्कायां "प्रत्ययादयमाम् विधीयते तत्र नास्ति विशेषो मिदचोऽन्त्यात्परत्वे वा" इत्युक्तम्। यदि हलन्तेभ्य आचारे क्विप्स्यात्तदा विशेषः स्पष्ट एवेति तथाकथनेनाभिधानाभावनितमितिभावः।

दृष्टान्तदार्ष्टान्तिकयोरेकत्वाभावात्तथेत्यनुपपन्नमतस्तद्योजयति—यथोपधेति। एवञ्च वैधर्म्येऽय-

नासिकस्य क्विझलोः" (पा० सू० ४।६।१५) इति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति भावः। "हन्तेरत्पूर्वस्य" (पा० सू० ८।४।२२) इति सूत्रं योगविभागेन व्याचष्टे—**हन्तेः**। प्रसङ्गादस्योदाहरणमाह—**प्रहण्यादिति**। प्रकृतोपयुक्तमाह—**अत्पूर्वस्य**।

**एकाजुत्तरेति**। न चाल्लोपे कृते एकाच्त्वं नास्तीति वाच्यम्। पूर्वस्मादपि विधौ स्थानिवत्त्वात्। न च "पूर्वत्रासिद्धे न स्थानिवत्" (का० वा०) इति वाच्यम्। "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" (का० वा०) इत्युक्तेः। यत्तु "अट्कुप्वाङ्" (पा० सू० ८।४।२) इति सूत्रे वृत्रघ्न इति भाष्यमुपादाय कैयटेन व्याख्यातं "प्रातिपदिकान्त" (पा० सू० ८।४।११) इति णत्वप्रसङ्ग इति तत् पञ्चमीसमासो माऽस्त्वित्याशयेन, "तस्य दोष" इत्यत्र णत्वग्रहणं माऽस्त्वित्याशयेन वा बोध्यम्। णत्वग्रहणप्रत्याख्यानं तु भाष्ये ध्वनितं कौस्तुभे प्रपञ्चितम्। वस्तुतस्तु "कुमति च" (पा० सू० ८।४।१३) इति नित्यं णत्वमिह न्याय्यम्। सर्वथाऽपि वैकल्पिकं नित्यं वा प्राप्तं णत्वं

---

र्घोपधापदानुवृत्तेरस्य व्यावृत्तिरित्यर्थः।

**पञ्चमीसमासो मास्त्विति**। सार्वत्रिको मास्तु अनित्यत्वादित्यर्थः। तदनित्यत्वेन स्थानिवत्त्वाभावे एकाच्त्वाभावादेव "एकाजुत्तर" (पा० सू० ८।४।१२) इति णत्वव्यावृत्तिः सिद्धेति भावः। **णत्वग्रहणमिति**। माधवपनीत्येतद्धि तत्प्रयोजनम्। तच्च बहिरङ्गतया "यस्येति च" (पा० सू० ६।४।१४८) इत्यल्लोपासिद्धत्वेनापि सिद्धमिति तन्मास्त्विति भावः। इदं त्रिपाद्यां तत्परिभाषाप्रवृत्त्यभिमानेन। **भाष्ये ध्वनितमिति**। अन्यथासिद्धमाधवपनीत्येतस्य तदुदाहरणत्वोक्त्येत्यभिमानः। **न्याय्यमिति**। तस्य "प्रातिपदिकान्त" (पा० सू० ८।४।११) इत्यपवाद-

---

न्तृष्टान्तः। नन्वेवंसति पथीनति मथीनतीत्यादावप्युपधादीर्घो न स्यादिति नामधातुस्थपरममूलविरोध इतिचेन्न। माधवानुरोधेन तस्य ग्रन्थस्य सत्वात्। अयं हि तदाशयः—नियमस्य सजातीयापेक्षत्वं सुप्रसिद्धमिति सर्वनामस्थाननिष्ठसर्वनामस्थानत्वस्यैवानपेक्षा नतु तद्गतसुप्त्वस्येति सुबानन्तर्य एव नियमफलनिषेधस्य प्रवृत्तिरिति, परे तु तेषामप्युक्तरीत्यानभिधानमेवेत्याहुः।

मूले—पञ्चमीसमासो मास्त्विति। 'वेभिदिता' 'माथितिको' 'अपीपचन्' इत्येतदुदाहरणानामन्यथासिद्धेः प्रदर्शनान्मास्त्वित्यर्थः। वस्तुतस्तु प्रैथैषिषम्नित्यादेरुक्तरीत्या तदुदाहरणत्वसम्भवेन तस्यावश्यकत्वेऽपि "निष्ठायां सेटि" इतिसूत्रे सेड्ग्रहणेन तस्यानित्यत्वं ज्ञापितमिति स सार्वत्रिको नेति मास्त्वित्यस्य इहेत्यादिः पूरणीय इत्याशयेनाह—सार्वत्रिक इति। "तस्य दोष" इति वचनस्थणत्वग्रहणस्याभावेऽपि तदीयप्रयोजनान्यासिद्धिमुपपादयति—भाष्येत्यादिना। इदम्—बहिरङ्गत्वेन "यस्येति च" इति लोपस्य सिद्धत्वप्रदर्शनम्। अन्यथासिद्धेति। उक्तरीत्या ऽन्यथासिद्धेरित्यर्थः। अभिमान इति। एतद्बीजन्तु त्रिपाद्यां सर्वथा बहिरङ्गपरिभाषा न प्रवर्तत इति। इतिसकृदावेदितमिति

नियमेन निवर्त्यत इति सिद्धम्।

भाष्ये तु 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः' (का०वा०)। किंप्रयोजनम्, वृत्रघ्नः स्रुघ्नः प्राघ्नानि, "हन्तेरत्पूर्वस्य" (पा०सू०८।४।२२) इति 'अत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्तम्। एतच्च वार्तिकाशयवर्णनमात्रं न तु वस्तुस्थितिः। वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसङ्ग्रहस्यैव न्याय्यत्वादिति दिक्। माधवेनोक्तमिति।

---

त्वादिति भावः। न च सन्निपातपरिभाषया तदप्राप्तिः। सवर्णेत्वेषु कवर्गव्यवायाश्रयणेन तद्विषये तस्या अनित्यत्वावश्यकत्वात्।

हादेशेष्विति। हादेशकवर्गव्यवाये इत्यर्थः। आ(१)र्षत्वाद्वार्तिके समासः। वार्तिके हादेशेत्युक्तेर्द्रुघण इत्यादौ "पूर्वपदात्" (पा०सू०८।४।३) इति णत्वं सिध्यति। तत्र हि हन्तेरप्प्रत्ययो घनादेशश्च। अत एव "अगारैकदेश" (पा० सू० ३।३।७९) इति सूत्रे प्रघणप्रघाणयोः कृतणत्वयोरुच्चारणम्। तत्रापि हन्तेर्घनघानादेशविधानात्। न्याय्यत्वादिति। न च वार्तिकरीत्या बहुवृत्रघ्नाणीति णत्वमायाति सूत्रारम्भे तु नेति वार्तिकारम्भस्यैव ज्यायस्त्वात्कथं न्याय्यत्वम्, बहिरङ्गत्वेन दीर्घस्यासिद्धत्वे तु प्राघानीत्यत्र दोषः, तथा सूत्रारम्भे प्रघनाघन इत्यत्र णत्वं प्राप्नोति वार्तिकरीत्या तु नेति वाच्यम्। "अत्पूर्वस्य" (पा० सू० ८।४।२२) इत्यनेन हस्थानिककवर्गाभाववद्धन्तेरेवोपलक्षणेनादोषात्। कृतणत्वयोः "अगारैकदेशे" (पा० सू० ३।३।७९) इति सूत्रे उच्चारणमत्रत्यात्पूर्वग्रहणस्योक्तार्थोपलक्षणत्वे मानम्। णत्वनिपातनकल्पनापेक्षयोक्तार्थग्राहकत्वौचित्यादिति भावस्तदेतद्ध्वनयतोक्तम्—वार्तिकार्थोपसङ्ग्रहस्येति।

---

न्याय्यत्वे साधकमाह—तस्येति। रत्नाकरोक्तं खण्डयति—न चेति। सन्निपातपरिभाषया घत्वस्य नकारसन्निपातजन्यतयेति भावः। तदप्राप्तिः—"कुमिति च" इत्यस्याप्राप्तिः। सर्वेति। "अट्कुप्वाङ्नुम्" इत्यस्य सर्वत्र सम्बन्धादिति भावः। तद्विषये—णत्वविषये। अनित्यत्वावश्यकत्वादिति। यदि तस्या अनित्यत्वादप्रवृत्तिर्न स्वीक्रियत इति तदा णत्वमात्रस्य कवर्गनिमित्तकत्वेन सन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वादत्पूर्वग्रहणस्य "हादेश" इतिवार्तिकस्य च वैयर्थ्यापत्तिरिति भावः।

हादेशेष्वितीति। कुव्यवायनिमित्तके णत्वे हस्थानिकेषु आदेशे प्रत्यासत्त्या कवर्गरूपेषु सत्सु प्रतिषेधो वक्तव्य इति वार्तिकार्थः। फलितार्थमाह—हादेशेत्यादिना। हादेशेष्वित्युक्तेरिति। हकारविशिष्टादेशपदोक्तेरित्यर्थः। एवञ्च विशेषणाभिधानफलप्रदर्शनमेतदिति लब्धम्। घनादेशश्चेति। "करणेऽयोविद्रुषु" इत्यनेन साधित इति शेषः। अत एवेति। तत्र तादृशोक्तेरेवेत्यर्थः। सूत्रेण वार्तिककारोक्तस्यार्थस्य सम्भव एव चेत्तदा न्याय्यत्वमित्याशङ्कां निराचष्टे—नचेत्यादिना। बहिरङ्गत्वेनेति। यथोद्देशपक्षे त्रिपाद्यान्तस्या अप्रवृत्तिः, कार्यकालपक्षे तु प्रवृत्तिरिति भावः। दोषः—णत्वापत्तिरूपो दोषः। उपलक्षणेनेति। अत्र मानन्तु अतं इति पञ्चम्यैव निर्वाहे पूर्वग्रहणम्भूमार्थकबहुव्रीहिलाभार्थम्, अकारः पूर्वो यस्माद्धन्तिनकारादिति। तेन लब्धन्तथाचोपलक्षणत्वं स्फुटमिति भावः।

वि० (१) हादेशस्याभेदेन कुपदार्थेऽन्वयेन "सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न" इति वार्तिकात् "कुव्यवाये" इत्यत्र समासाप्राप्त्याऽऽह—आर्षत्वादिति। वस्तुतः कुव्यवायनिमित्तके णत्वे हस्थाने आदेशेषु प्रत्यासत्त्या कवर्गरूपेषु सत्सु णत्वप्रतिषेध इतिवार्तिकार्थः।

इत्थं हि तदीयो ग्रन्थः—'असञ्ज्ञायामल्लोपे उत्तरपदमनङ्कं स्यात्। स्थानिवद्भावश्चाल्विधित्वान्न' इति एकाजुत्तरपदत्वाभावात् "प्रातिपदिकान्तनुम्विभक्तिषु च" (पा०सू०८।४।११) इति विकल्पो भवति। 'वृत्रघ्नो वृत्रहण' इति। तद्भाष्येति। किं चाल्विध्यर्थमेव "अचः परस्मिन्" (पा० सू० १।१।५७) इत्यस्यारम्भात्। तस्याप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात्। विकल्प इत्यसङ्गतम्। "कुमति च" (पा० सू० ८।४।१३) इति सूत्रस्य दुर्वारत्वादित्यवधेयम्।

•"मघवा बहुलम्" (पा० सू० ६।४।१२८)॥ "अर्वणस्त्रसावनञः" (पा०सू०६।४।१२७) इति सूत्रात् तृ इत्यनुवर्तते। तदपेक्षया च मघवेति षष्ठ्यर्थे प्रथमा तदाह—**मघवन्शब्दस्येति। अधातोरिति।** अधातुभूतपूर्वस्यापीत्यर्थः। अञ्चतिग्रहणं हि नियमार्थम्। धातोश्चेद्भवति अञ्चतेरेवेति। एवं च गोमानिवाचरति गोमानित्यादौ सम्प्रति धातुत्वेऽपि विद्ध्यर्थमधातुग्रहणम्। एतच्च मूल एव स्फुटीभविष्यति। ननु कुर्वन् इत्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह—**इहेति। बहुलग्रहणादिति।** क्वचिदन्यदेवेत्यर्थकादित्यर्थः। **निपातनादिति।** महेर्हकारस्य घकारो वुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। **प्रत्याख्यातामिति।** तथा च "छन्दसीवनिपौ" इत्यत्र कैयटेनोक्तम्—

---

भूतपूर्वपर्यन्तमधातुपदस्य लक्षणायां बीजमाह—अञ्चतिग्रहणं हीति। अञ्चतेरिति। नलोपिनोऽञ्चतेरित्यर्थः। नलोपेन निर्देशात्। सामान्यापेक्षश्च नियमस्तेन पर्णध्वद् गोमत्यतेः क्विपि गोमानित्यादौ "उगितश्च" (पा०सू०४।१।६) इति ङीबपि नेति दिक्। स्पष्टं चेदं भाष्ये "उगितश्च" (पा०सू०४।१।६) इति सूत्रे। कैयटेने·

---

मानान्तरमप्याह—प्रघाणप्रघणयोरिति।

नलोपिन इति। विशेषणविशिष्टाञ्चतिपरमत्राञ्चतिपदमित्यत्र साधकमाह—नलोपेनेति। एतेन "उगिदचाम्" इति सूत्रव्याख्यानावसरे नलोपिनोऽञ्चेरिति यत्परममूले उक्तं तेनैकवाक्यता भवतीति ध्वन्यते। नचैवंसति नलोपिन एव यथा स्यान्न पूजार्थस्येत्यस्य लाभार्थमञ्चतिग्रहणं चरितार्थमिति कथमुक्तनियमलाभ इति वाच्यम्, भाष्यप्रामाण्येनावामित्यस्याप्युभयार्थलाभ इत्याशयात्। तत्रैको नियमो मूले एव दर्शितो द्वितीयस्तु अञ्चतेश्चेन्नलोपिन एवेति बोध्य इति। तेन-नियमस्य सामान्यापेक्षत्वेन। एवञ्चाधिकलक्ष्यसङ्ग्रहस्योचितत्वात्सामान्यापेक्षनियम एवोचित इति भावः। ङीबपीति। अपिना नुमः परिग्रहः। दिगिति। दिगर्थस्तु प्रथमनियमेन पर्णध्वदित्यत्रेव गोमानित्यत्रापि ङीप्न। किञ्च प्रकृतसूत्रे झल्ग्रहणापकर्षण नुम् झलन्तलक्षण एव ग्राह्यः। तेन शामिशमिनावित्यादौ नातिप्रसङ्ग इति बोध्यम्। अत्र-भाष्य इति। तत्र मूलोक्तरीत्या स्पष्टम्। 'अन्त्ये धातोरुगितः प्रतिषेधः कार्यः, अञ्चतेश्चोपसङ्ख्यातम्, प्राचीनोभयकर्तव्यम्, उक्तनियमेन सिद्धिः' इत्युक्तम्। कैयटग्रन्थस्य

इहानेकंवाक्यं, तत्र अनुपसर्जनमण् योऽकारस्तदन्तादिति व्याख्यानान्नेह-आपिशलमधीते आपिशला ब्राह्मणीति । अत्र हि प्रोक्तार्थेऽण् उपसर्जनम् । अध्येत्रण् तु लुप्तः । वर्णप्राधान्याच्च प्रत्ययलक्षणम् । अतष्टाबेव भवति । **ताच्छीलिकेति** । अयं भावः—"शीलं" (पा० सू० ४।४।६१) "छत्रादिभ्यो णः" ( पा० सू० ४।४।६२ ) इति योणस्तस्मिन् अण्कार्यं भवति । "कार्मस्ताच्छील्ये" इति ज्ञापकात् । अनेन हि "अन्" (पा० सू० ६।४।१६७) इति अणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । **चौरीति** । चुरा शीलमस्याः ।

---

अत्र हीति। न चैवमुपसर्जनाधिकारस्य चारितार्थ्ये मूलोक्ततदन्तविधिज्ञापकतानुपपत्तिरिति वाच्यम् । लक्ष्यानुसारिव्याख्यानेन स्त्रियामित्यस्य गृह्यमाणविशेषणतयाऽपि तद्वारणसम्भवात् । तस्माद्बहुकुरुचरेत्येव तद्व्यावर्त्यम् । तच्च तदन्तविधिं विना नोपपद्यत इति तज्ज्ञापकत्वं, स्त्रियामित्यस्य प्रकृतिविशेषणत्वज्ञापकत्वं चेति बोद्ध्यम् । तत्करणे एतद्व्यावृत्तिरपि अनेनैव उपसर्जनपदेनोभयोरपि ग्रहणमित्याशयात् । अण्कार्यमिति । ङीबित्यर्थः । ताच्छीलिकेत्युक्तेः "तदस्यां प्रहरणम्" ( पा० सू० ४।२।५७ ) इति णे दाण्डेत्येव ।

पत्यं ङीत्यर्थः । एतेन'गोत्रञ्च चरणैः सह' इति जातीत्वमस्तीति सूचितम् । मूले—इहानेकमिति । नच "कन्नेभ्य" इत्यादावपि लक्ष्यभेदेनानेकवाक्यताऽस्त्येवेति वाच्यम् । तत्र सङ्ग्राहकवाक्यस्यैकत्वमिह तु तस्य नानात्वमित्याशयात् । अत एव पञ्चाश्वेत्यत्र न ङीप् । नचैवमिति । एवं आपिशलमधीते आपिशलेत्यस्य व्यावर्त्यस्य लाभे व्याख्यानेनेति मूलोक्तरीत्या "अनुपसर्जनात्" इत्यस्य प्रयोजनमुक्त्वा "एतदपि नास्ति प्रयोजनम्, स्त्रियामिति वर्त्तते नाणं विशेषयिष्यामः, स्त्रियां योऽण् विहितः, एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणी अत्र प्राप्नोति, नष दोषः अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्, पश्चादध्येत्र्यामभिधेयायामण् लुप्तः, सः यश्च श्रूयते, उत्पन्नस्तस्मादीकार इति पुनर्न भविष्यति" इति भाष्यकृदुक्तग्रन्थमूलकव्याख्यानेनेत्यर्थः । तस्मात्—उक्तरीत्या तद्वारणात् । एतच्चेति । तस्य तद्व्यावर्त्यत्वञ्चेत्यर्थः । नन्वेवमुक्तरीत्या तस्य तदन्तविधिज्ञापनेऽपि स्वविषये चारितार्थ्यन्दुरुपपादमिति कथं ज्ञापकत्वमत आह—स्त्रियामित्यस्येति । तत्करणे—तद्व्यावृत्त्यर्थम् "अनुपसर्जनात्"इत्यस्य करणे । एतद्व्यावृत्तिरपीति । आपिशला काशकृत्स्ना एतयोरपीत्यर्थः । अनेनैवेति । प्रक्रान्तेनानुपसर्जनाधिकारेणेत्यर्थः । ननु प्रतियोगिसमपकमुपसर्जनपदं शास्त्रीयोपसर्जनबोधकमिति कथं व्यावृत्तिरत आह—उपसर्जनेति । कृत्रिमाकृत्रिमन्यायोऽत्रानुपसर्जनाधिकारप्रयोजनप्रदर्शनपरभाष्यप्रामाण्येन बाध्यत इति भावः । इत्याशयादिति । मूलस्येति शेषः । अण्कार्यमित्यत्राण्रूपं कार्यमित्यर्थस्य भ्रमवारणायाह—ङीबित्यर्थ इति । इदमुपलक्षणम् "अणो द्व्यचः" इति ष्फिञ्सिद्धिरपि प्रयोजनम् । एतेन यदि ङीप् सिद्धिरेव प्रयोजनन्तदा स्वातन्त्र्येण ङीब्विधानेन सिद्धे ज्ञापनस्य नोपयोग इति परास्तम् । नच छत्रादिभ्यो लाघवादणेव कार्यः किमनया कुसृष्ट्येति वाच्यम्। ज्ञापकसिद्धस्यासार्वत्रिकत्वेन छात्रेत्यस्य सिद्ध्यर्थमेवमभिधानात् । दाण्डेत्येवेति । एवम् "ताच्छीलिक"इत्युक्तौ तत्पदोपादेन यत्र प्रथमान्तात्ताच्छील्यार्थे णस्तत्रैवाण्कार्यमित्यपि बोधितम् । "स एव शीलिकाम्" इतिवार्तिकस्य मांसशीला मांसकामेत्याद्येवोदा-

"हलस्तद्धितस्य"(पा०सू०६।४।१५०) ॥ उपधायामित्येव ।
ननु "यस्येति च" (पा०सू०६।४।१४८) इति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या । न चाल्लोपस्य स्थानिवद्भावः । यलोपे तन्निषेधात् । मैवम् । यलोपे कार्ये ऽल्लोपस्याभीयत्वेनासिद्धत्वात् । अनपत्येति । यद्यपि "आपत्यग्रहणं कर्तव्यम्" इति वार्तिकं, तथाऽपि अपत्याधिकारविहितपरं तत् । तादृशश्च गर्गादियञेव न तु देवाद्यञ् । तस्यापत्याधिकारात्प्रागेव पाठात् । अत एव भाष्यकृता कञ्क्करपोऽयञश्चेति, गर्गादिभ्यो ऽयञिति च अकारः प्रश्लिष्टः । "यस्कादिभ्यो गोत्रे ऽयञञोश्च" इति सूत्रेऽप्येवम् ।

"प्राचां ष्फः" (पा० सू०४।२।१७) ॥ तद्धितग्रहणं प्रातिपदिक-

---

अकारः प्रश्लिष्ट इति । तद्वार्तिकप्रत्याख्यानायेति शेषः । "अभिजिद्विदभृद्" (पा०सू०५।३।११८) इत्यादिसूत्रेऽस्त्रियामित्यनुवृत्तेस्तस्य गोत्रार्थकत्वेऽपि न तत्र ङीप् सिद्धान्तेऽपीष्टः । "संघाङ्क" (पा०सू०६।२।३९) इति सूत्रे एतद्भाष्यप्रामाण्यादेकानुबन्धकपरिभाषाया अप्रवृत्त्या गर्गादियञ् एव ग्रहणमिति भावः । एवमिति । अकारः प्रश्लिष्ट इत्यर्थः ।

प्रातिपदिकसंज्ञार्थमिति । तत्फलं च ङीषिति भावः । न लिङ्गविशिष्टपरिभाषया तत्सिद्धिः । एतत्सूत्रस्थैतत्समाधानार्थभाष्यप्रामाण्येनास्याः स्त्रीप्रत्ययप्रकरणे-

---

ष्टतम् । मूले—अत एवेति । अपत्यशब्दस्यापत्याधिकारविहितपरत्वादेव अयञिति अयमकारो ऽनुनासिकस्तस्येत्संज्ञया निवृत्तिरिति बोध्यम् ।

अकारप्रश्लेषस्य फलमाह—तद्वार्त्तिकेति । एवञ्च तद्वार्तिकप्रत्याख्यानपरभाष्यमेवापत्यशब्दस्यापत्याधिकारविहितपरत्वे मानमिति दर्शितम् । ननु स्थलत्रय एव यञकारस्य प्रश्लेषस्तदा "अभिजित्" इति सूत्रविहितयञन्तान्ङीबनापत्तिरत आह—अभिजिदिति । अस्त्रियामित्यनुवृत्तेरिति । "व्रातच्फञ्" इतिसूत्रादित्यादिः, सा च मण्डूकप्लुत्या कार्या । गोत्रार्थकत्वेऽपीति । किमत्रमानमिति चेत्, तत्सूत्रभाष्यप्रवृत्तमेव । तथा हि—"तत्र गोत्रमिति वक्तव्यम्, अस्य गोत्रत्वप्रयुक्तकार्यं भवतीति तदर्थः, किम्प्रयोजनम् आभिजितकः, आभिजिदित्यस्यायमित्यत्र "गोत्रचरणात्"इति वुञ् यथा स्यात्, तच्चाकर्तुं शक्यम्, गोत्रादयं स्वार्थिको गोत्रे एव भवति" अत्र भाष्ये वुञ् एव फलत्वेनोक्तो, नतु ङीप् । एतेन "गर्गादिभ्योऽयञ्"इत्यत्रैव "अभिजित्"इतिसूत्रेऽप्यकारप्रश्लेष इति वदन्तः परास्ताः । अपीष्ट इति । एवञ्च स्त्रियां यञेव स नास्तीति न तत्र ङीपः सम्भावना, किन्तु गोत्रार्थबोधकत्वातिदेशाज्जातिलक्षणङीष एवेति न तत्राकारस्य प्रश्लेषः स्त्रियामित्यस्यासम्बन्धेऽपि । ननु "गर्गादिभ्य" इतिसूत्रे ऽकारस्य प्रश्लेषे "सङ्घाङ्क" इति सूत्रेऽस्य अनुबन्धकत्वाद्ग्रहणन्न स्यादत आह—सङ्घाङ्केतीति । एतद्भाष्येति । "सङ्घाङ्क" इतिसूत्रे गार्गो घोषः गार्गोऽङ्क इत्युदाहरणपरभाष्येत्यर्थः । "अभिजित्" इत्यस्यापत्याधिकारपठितभिन्नत्वात्तत्र गोत्रपदेन ऋष्यपत्यरूपं लौकिकं गोत्रमिति बोध्यम् ।

कस्यचिदुक्तिं खण्डयति—नचेति । एतत्समाधानार्थेति । 'तद्धितेतिकिमर्थम्, षितः प्रातिपदिकाधिकारार्थम्, नैतदस्ति प्रयोजनम्, षित्करणसामर्थ्यादेवात्रेकारो भविष्यति" इति भाष्येत्यर्थः । अस्याः । लिङ्गविशिष्टपरिभाषाया इत्यर्थः ।

संज्ञार्थम्। ननु तां विना ऽपि षित्करणसामर्थ्यादेव ङीष् भविष्यति। एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित् ष्फ इति ज्ञापयति। यञन्ते सवर्णदीर्घेणापि रूपसिद्धौ "यस्य" ( पा० सू० ६।४।१४८ ) इति लोपस्यानावश्यकत्वात्। तेन "आसुरेरुपसंख्यानम्" इति वक्ष्यमाणं सिद्ध्यति।

"आयने" ( पा० सू० ७।१।२ )॥ फकारादिष्वकार उच्चारणार्थः। आयनीनोर्नकारस्य नेत्त्वम्। फिनो नित्करणसामर्थ्यात्।

"कौरव्य" ( पा०सू० ४।२।६१ )॥ कथं तर्हि 'यद्यसौ कूपमाण्डूकि तवैतावतिकः स्मय' इति भट्टिः। अत्राहुः—कौरव्यसाहचर्यादपत्यप्रत्ययान्तस्यैव माण्डूकस्येह ग्रहणम्। इह तु मण्डूकस्येयं भार्येति "तस्येदम्" ( पा० सू० ४।३।१२० ) इत्यण्। कुमारीति। प्रथमवयोवाचीएष शब्दः। न त्वनूढत्वप्रयुक्तः। वृद्धकुमारीति तु गौणः प्रयोगः।

ऽनुपस्थितेः। सामर्थ्यादेवेति। अप्रातिपदिकत्वेऽपीति भावः।

उच्चारणार्थ इति। तेन ढ्क आदेशसिद्धिः। नित्करणेति। असञ्जातविरोधन्यायसहकृतेत्यर्थः।

न त्विति। अल्पवयस्यूढायामपि प्रयोगादिति भावः। गौण इति। पुंसाऽसंप्रयोगरूपसादृश्यादिति भावः।

तेन-अकारस्योच्चारणार्थत्वेन। तदकारस्य विवक्षितार्थत्वे रेफपरस्याकारान्तत्वाभावेनादेशो न स्यादिति भावः। उच्चारणार्थत्वे मानन्तु 'फढखछघाम्' इति निर्देश एव अत्र। ढ्क इति। फिनोऽप्युपलक्षणम्। मूले-फिनो नित्करणादिति। यद्यायनादेशावयवस्य नस्येत्संज्ञा स्यात्तदाऽनेनैव "ञ्नित्यादि" इत्यस्य प्रवृत्तिसिद्धौ फिनो नित्वं व्यर्थं स्यादिति भावः।

ननु आयनो नित्करणसामर्थ्यात् फिनो नस्य नेत्त्वमिति वैपरीत्यमेव कुतो नेत्यत आह—असञ्जातेति। असञ्जातविरोधात्सञ्जातविरोधस्य सङ्कोच एवोचित इति न्यायेनेत्यर्थः। न सञ्जातो विरोधो वैयर्थ्यशङ्कया विरोधो यस्य तस्येत्यर्थः। उत्तरकालिकप्रतीतिविषये यदीत्संज्ञा तदा प्राथमिकप्रतीतिविषये फिनि नित्वार्थं नकारोच्चारणं व्यर्थमिति शङ्का भवतीति तदित्संज्ञाप्रापकशास्त्रसङ्कोच एवोचित इति भावः। एवञ्च तादृशन्यायसहकृतं यन्नित्करणन्तत्सामर्थ्यादिति फलितम्।

अल्पवयसि-प्रथमवयसि। अपिना-अनूढासमुच्चयः। एवञ्च या ऽल्पवयस्का ऊढा च तस्यान्तादृशप्रयोगदर्शनेनास्य प्रथमवयसः प्रवृत्तिनिमित्तत्वमावश्यकम्। नन्वेवंसति वृद्धकुमारीत्येवम्प्रयोगो "नमुने" इतिभाष्ये दृश्यते, तस्य कथमुपपत्तिरित्यत आह—मूले-वृद्धकुमारीति। गौणः—लाक्षणिकः। लक्षणाप्रयोजकसम्बन्धमाह-पुंसाऽसम्प्रयोग इति। कौमारयौवनवृद्धत्वात्मकानि त्रीणि वयांसि। यथाहुः—

"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥

इति। केचित्तु बाल्यमध्यत्ववृद्धत्वात्त्रीणि—

"आषोडशाद्भवेद्बालो यावत्क्षीरान्नवर्तकः। मध्यमः सप्तर्तिं यावत्परतो वृद्ध उच्यते"।

इत्याहुः। आयुषश्चतुर्भागैश्चत्वारीत्यन्ये। यथाहुः—

"आद्ये वयसि नाधीतन्द्वितीये नार्जितन्धनम्। तृतीये न तपस्तप्तञ्चतुर्थे किं करिष्यति"।

इति "वयस्यचरम" इति वार्तिकं सर्वथा ऽऽरब्धव्यमेवेति बोध्यम्।

त्र्यानीकेति। त्रयाणामनीकानां समाहारः। अत्राजादेराकृतिगणत्वात् टाबिति त्र्यनीकाधिकरणे मीमांसकाः।

पञ्चाश्वेति। नन्वत्र "द्विगोः" (पा० सू० ४।१।२१) इति ङीप् मा भूत्; ठगन्तत्वात्तु स्यादेवेति चेत्, न ठको योऽकार इति व्याख्यानात्। द्विबिस्तेति। 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः। आचितो दश भाराः स्युः। द्विकम्बल्येति। द्वाभ्यां कम्बल्याभ्यां क्रीता। कम्बल्यम्-ऊर्णापलशतम्। "कम्बलाच्च संज्ञायाम्"(पा०सू०५।१।३)इति यत्। क्रीतार्थस्य ठञो लुक्। द्व्याढकीति। द्वावाढकौ पचती"आढकाचितपात्रात्खोऽन्यतरस्याम्" (पा०सू०५।१।५३) "द्विगोष्ठंश्च" (पा०सू०५।१।५४) इति खष्ठन्भ्यां मुक्ते प्राग्वतीयष्ठञ्, तस्य लुक्। एतेन द्व्याचिता व्याख्याता।

"काण्डान्तात्" (पा०सू०४।१।२३)॥ षोडशहस्तप्रमाणो दण्डः काण्डम्। यद्यपि विशेषणेन तदन्तविधिः सिद्धः, तथाऽपि अन्तग्रहणे असति क्षेत्र इत्येतत् श्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तदन्तस्य। ततश्चेहापि स्यात्—द्वाभ्यां काण्डाभ्यां-काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति। इह तु न स्यात्—द्विकाण्डा क्षेत्रभक्तिरिति। अतोऽन्तग्रहणम्। मात्रच इति। यत्तु प्राचोक्तं द्वयसचो लुगिति, तन्न।

---

ठगन्तत्वादिति। द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यादौ निषेधश्चरितार्थः। अत्र हि कनो लुक्।

कम्बल्यमिति। अपरिमाणत्वेऽप्येतयोर्ग्रहणं नियमार्थम्। उन्मानस्य चेद्, बिस्तकम्बल्ययोरेवेति। तेनान्यत्रोन्माने द्विपली द्विनिष्कीत्यादिसिद्धिः।

श्रुतत्वादिति। अवान्तरवाक्यार्थबोधोत्तरं "येन विधिः" (पा०सू०१।४।७२) इत्यस्य प्रवृत्तेस्तत्काले श्रुतत्वात्तेनैव सम्बन्धे जाते पश्चात्तदन्तविधावपि पुनर्व्यापारे

---

ननु पञ्चाश्वेत्यत्र यदि ठगन्तत्वान्ङीपः प्राप्तिस्तदा निषेधवैयर्थ्यमत आह—द्वाभ्यां शताभ्यामिति। आदिना पञ्चानामजानान्निमित्तं "धनपतिसयोग" इत्यर्थे "गोद्व्यच" इति यतो "अध्यर्द्ध" इति लुकि पञ्चाजेत्यस्य सङ्ग्रहः। "अपरिमाण" इति सूत्रे परिमाणशब्दः पारिभाषिकस्यार्थस्य बोधकः। यथाहुः—

'ऊर्द्ध्वमानङ्किलोन्मानम्परिमाणन्तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः'॥

इति। अत एव द्वे वर्षे भूता द्वाभ्यां शताभ्याङ्क्रीता द्विवर्षा द्विशतेत्यादौ; तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधस्य सिद्धिः। नन्वेवं सत्युन्मानवाचकौ बिस्तकम्बल्यशब्दौ नोपादेयौ, अपरिमाणत्वादेव सिद्धेरत आह—अपरिमाणेति।

ननु श्रुतस्य शब्दस्य तदन्तपरतया श्रुतत्वादित्येतन्मात्रोपादानेन कथमिष्टसिद्धिरत आह—अवान्तरेति। तत्काले—अवान्तरवाक्यार्थबोधकाले। अयम्भावः-"येनविधिः" इत्यस्य प्रवृत्तिर्विशेष-

'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' ।

इति सिद्धान्तात्। **द्विकाण्डी रज्जुरिति**। नन्विहापि परिमाणान्तादिति पूर्वेण निषेधः स्यात्। काण्डशब्दस्यायामपरतयाऽपरिमाणार्थत्वात्। परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणमाढककुडवादि। न तु यथाकथंचित्परिच्छेदकमात्रम्। यदाहुः—

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥

इति। अत एव द्विहस्ता भित्तिरित्यत्र ङीब् न। अत्राहुः—नियमार्थमिदं; क्षेत्रे एव निषेधो यथा स्यादिति। अतो द्विकाण्डो रज्जुरित्यत्र ङीबेव सूत्रस्य फलमिति।

**"पुरुषात्प्रमाणे"** (पा०सू०४।१।२४)॥ यद्यपि पुरुषशब्दो जातिवचनस्तथाऽपि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणं वर्तत एव। प्रमाणशब्दसामानाधिकरण्यात्। वृत्तौ तु तत्स्वभावादेव। तथा च शुल्बसूत्रम्—"पञ्चारत्निः पुरुष" इति। **द्विपुरुषीति**। अत्र न्यासकारः—"प्रमाणे लो द्विगोर्नित्यम्" इति द्वयसचो लुगित्याह। तन्न। पुरुषशब्दस्य प्रमाणवाचित्वाभावेन "प्रमाणे ल" इति श्लोकवार्तिकस्य तत्राप्रवृत्तेः। ये हि शमादिवत् प्रमाणत्वेन प्रसिद्धास्तत्रैतत्प्रवर्तते, न तु पुरु-

---

मानाभाव इति भावः। इहापीति। इहैवेत्यर्थः। सिद्धान्तादिति। पोऽशहस्त-प्रमाणदण्डार्थकाण्डशब्दस्तु तिर्यङ्मानमिति न तस्योर्ध्वमानत्वमिति भाव.।

**प्रमाणं वर्तत एवेति**। परिच्छेदके वर्तत इत्यर्थः। **तत्स्वभावादिति**। वृत्तिस्वभावादित्यर्थः। **द्वयसचो लुगिति**। तस्यायं भावः—आयामो दैर्घ्यं तच्च द्विविधम्। तिर्यगूर्ध्वं च। उन्मानं च तुलादावारोप्य येन मीयते तदिदं च विनिगमनाविरहादिति। **प्रमाणवाचित्वाभावेनेति**। तिर्यङ्मानस्यैव प्रमाणत्वात्। तिर्यङ्मानस्यैवायामपदेन प्रमाणलक्षणे ग्रहणं न तूर्ध्वमानस्य। 'ऊर्ध्वमानं किलोन्मानम्' इत्युक्तेरिति भावः। द्विगोर्लुगित्यंशेऽपि प्रमाणे इत्यनुवर्तत एवेति तात्पर्यम्। **प्रमाण-**

---

णज्ञानाधीना तज्ज्ञानत्त्वमवान्तरवाक्यार्थबोधोत्तरमेवेति। **मानाभाव इति**। प्रत्युत निराकाङ्क्षत्वमत्र प्रतिबन्धकमस्तीति बोध्यम्। अपिशब्दोपादाने इह तु न स्यादित्युत्तरवाक्यासङ्गतिरत आह—**इहैवेति**। तथाचापिशब्द एवार्थ इति भावः। **तिर्यगिति**। प्रकृत इत्यादिः। आयामपरिच्छेदकत्वेन प्रमाणवाचित्वादिति भावः। मूले—**आयामपरतया**—आयामपरिच्छेदकपरतया। **आरोहतः**-उच्छ्रायात्। **परिणाहतः**-विस्तारात्। **अत एव**—आयामपरिच्छेदकस्यापरिमाणार्थत्वादेव। **येन**—कर्षादिना। इदञ्च—ऊर्ध्वायामपरिच्छेदकञ्च। एवञ्चास्य द्विरूपत्वमिति फलितम्। ननु पुरुषशब्दस्य प्रमाणवाचित्वाभावेनेत्यसङ्गतम्पूर्वग्रन्थविरोधादत आह—**तिर्यङ्मानस्यैवेति**। **इत्युक्तेरिति**। पृथगुक्तेः। ननु श्लोकवार्तिके "प्रमाणे ल" इत्यस्य भिन्नवाक्यत्वेन तत्प्रकृतेर्निर्बाधतया तद्-

षशब्देऽपि । अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात् । स्पष्टं चेदम्-"पुरुषहस्तिभ्यामण् च" (पा०सू०५।२।३८) इति सूत्रे पदमञ्जर्याम् । न चैवं द्वयसज्दघ्नचावपि नास्मात्स्यातामिति वाच्यम् । 'ऊर्ध्वमाने मतौ मम' इति वचनात् । एवं "पुरुषात्प्रमाणे" (पा०सू०४।१।२४) इत्यस्यापि सामर्थ्यादेव प्रवृत्तिः । यत्तु तत्रैव सूत्रे "द्विगोर्नित्यं लुग्" इति वृत्तिग्रन्थमुपादाय हरदत्तेनोक्तम्-तस्मादप्राप्ते एवात्र लुग्विधीयते इति । तदपि चिन्त्यम् । मुनित्रयानुक्तस्य विधानोक्तेऽर्थाहृतत्वात् । यदपि प्राचीनप्रक्रियां व्याचक्षाणैरुक्तं "पुरुषहस्तिभ्याम्" (पा०सू०५।२।३८) इत्यत्र पठ्यमानेन वार्तिककान्तरेण लुगिति । तदपि रभसोक्तिमात्रम् । उदाहृतसूत्रस्य भाष्यवार्तिकाराभ्यामस्पृष्टत्वादित्यास्तां तावत् । वस्तुतस्तु "पुरुषात्प्रमाणे" (पा०सू०४।१।२४) इति सूत्रे द्विगोस्तद्धितलुकि इत्यनुवर्तते । तत्सामर्थ्याल्लुगप्याक्षिप्यते । हरदत्तोक्तिरपि कथंचिदेवं परतयैव नेयेति सहृदयैराकलनीयम् । प्रमाणे किम् , द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरु-

---

त्वेन प्रसिद्धा इति । तिर्यङ्मानत्वेन प्रसिद्धा इत्यर्थः । शमादीनामूर्ध्वाधरादिगवस्थितवस्तुपरिच्छेदकत्वेऽपि तिर्यगवस्थितवस्तुनोऽपि परिच्छेदकत्वात्तत्वेन सिद्धिरक्षता । अन्यथेति । न च "प्रमाणे ल" इत्यत्र "समर्थानां प्रथमाद्वा" (पा०सू०४।१।८२) इत्यतो वेत्यनुवृत्तेरुक्तप्रयोगसिद्धिः । आद्यपदयोरननुवर्तनेन वेत्यस्याप्यसम्बन्धात् । लुक्स्यादिति । शम इत्यादाविवेति भावः । सामर्थ्यादिति । तिर्यगवस्थितवस्त्वपरिच्छेदकत्वेऽपि सामर्थ्यात्प्रमाणपदस्य परिच्छेदकमात्रपरत्वमिति भावः । लुगप्याक्षिप्यत इति । इदमपि वृत्त्याशयवर्णनमात्रम् । वस्तुतस्तु द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे "तदस्य परिमाणम्" (पा०सू०५।१।५७) इति ठकञो वा "अध्यर्द्ध" (पा०सू०५।१।५८) इति लुकि शास्त्रस्य चारितार्थ्यात् तदाक्षेपे न मानम् । तत्र हि परिमाणशब्देनोत्तरसूत्रानुरोधेन परिच्छेदकमात्रग्रहणमिति तत्त्वम् ।

स्त्रिरदुष्टैवेत्यत आह—द्विगोरिति । शमादीनाम्पुरुषतुल्यत्वशङ्कां वारयति—शमादीनामिति । शमशब्दो हस्तवाची 'पाणिः शमः शयो हस्त' इत्यमरोक्तेः, 'पञ्चशाखः शमः पाणि:' इति पाठान्तराच्च । आदिना—अङ्गुल्यादीनाङ्ग्रहणम् । वस्तुतोऽपीति । अत एव द्विशमी द्विशमेति तत्र रूपद्वयम्भवति । वस्तुत आद्ये लुगप्राप्त्या द्विशमद्वयसीत्येव । तत्त्वेन—तिर्यङ्मानत्वेन । अत एव वितस्तिर्द्वादशाङ्गुल इति प्रसिद्धिः । पुरुषशब्दस्य तु ऊर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेन क्वचिदपि न प्रमाणवाचकत्वम् । प्रयोगसिद्धिरिति । लुको वैकल्पिकत्वयोक्तप्रयोगसिद्धिः । आद्यपदयोः—समर्थानाम्प्रथमादित्यनयोः तयोः प्रत्ययविधावुपयुक्तत्वेनायोग्यत्वादत्रासम्बन्ध इति भावः । असम्बन्धादिति । सन्नियोगशिष्टन्यायोऽत्र साधक इति भावः । दृष्टान्तप्रदर्शनेन कथितस्य दार्ढ्यम्भवतीत्याशयेनाह—शम इत्यादाविवेति । सामर्थ्यं स्पष्टयति—तिर्यगेवेति । सामर्थ्यात्—तदुपादानसामर्थ्यात् । इदमपि । वस्तुतस्त्वित्यादिना मूलोक्तमपि । उपादानसामर्थ्यमेव नास्तीत्याह—वस्तुत इति । "आर्हात्" इतिसूत्रे परिमाणम्पारिभाषिकमेवेत्याशयेनाह—ठक इति । उन्मानस्याग्रहणमिति मतेनाह—ठञ इति । उत्तरसूत्रेति । "सङ्ख्यायाः संज्ञासङ्घ" इतिसूत्रेत्यर्थः ।

षा गौः। तद्धितलुकीत्येव। समाहारे पञ्चपुरुषी।

"ऊधसोऽनङ्" (पा०सू०५।४।१३१) ॥ नादेशेनैव सिद्धेऽनङ्करणं "धनुषश्च" (पा०सू०५।४।१३२) इत्येतदर्थम्।

"दाम" (पा०सू०४।१।२७) ॥ बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टार्थम्। **संख्यादेरिति**। स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः।

"केवलमामक" (पा०सू०४।१।३०) ॥ **इत्यादीति**। अद्ध्यस्यां मामकी तनू। मित्रावरुणयोर्भागधेयी। आनषेऽयास्तन्वः सन्तु पापीः। उतापरीभ्यो मघवा विजिग्ये। समानीव आकूतः। आर्यकृती। सुमङ्गली। शिवा रुद्रस्य भेषजी। **प्रत्युदाहरणं त्विति**। यत्तु प्राचाऽन्तर्वती पतिवतीति प्रत्युदाहृतम्। तदयुक्तमिति भावः। **व्यस्ते कथमिति**। यत्तु प्राचा समस्तेऽप्युपचार इति वर्णितम्, तन्मुधेति भावः।

---

नादेशेनेति। अत एव "ऊधसो नकारो लिङ्गाधिकारे" इति वार्तिककृतोक्तम्। एतेन लाक्षणिकत्वादस्यानो "अल्लोपोऽनः" (पा०सू०६।४।१३४) इति न स्यात्। कुण्डोध्न्यादिभ्य आचारक्विप्यात्मनेपदार्थं च ङकार इत्यपास्तम्। अत्रत्यवार्तिकभाष्यप्रामाण्येनान्ग्रहणे प्रतिपदोक्तपरिभाषाया आचारक्विब्भावस्य च तदन्ते आत्मनेपदाभावस्य वा कल्पनात्।

तदयुक्तमिति। अन्तर्वतीत्यत्र मतुपोऽप्राप्तेरिति भावः। तन्मुधेति। "विभाषा सपूर्वस्य" (पा०सू०४।१।३४) इत्यत्र यज्ञसंयोग इत्यस्यासम्बन्धात्। अत एवाशायाः पतिराशापत्नीति तत्रोदाहृतं भाष्ये। आशापूरकत्वेन कल्पाश्चित्तत्पतित्वमिति भावः।

"संख्या बाह्या तु सर्वतः" इत्युक्तेस्तद्वाचकस्यापरिमाणवाचकत्वात्सामानाधिकरण्यानुपपत्तिरन्यथा स्यादिति भावः। अत एव षष्टिर्जीविकापरिमाणमस्य षाष्टिक इत्यस्य सिद्धिः।

मूलस्थपूर्वपक्षदार्ढ्यायाह—अत एवेति। नादेशेन सिद्धत्वादेव। एतेन—उक्तार्थस्य वार्तिककारसम्मतत्वेन। न स्यादिति। एतेनाकारोच्चारणस्य फलमुक्तम्। ङकारोच्चारणस्य फलमाह—कुण्डोध्न्यादिभ्य इति। एतेनेत्यदर्थं स्पष्टयति—अत्रत्येति। अन्ग्रहण इति। अर्थवत्परिभाषावदिति शेषः। तदभावकल्पनमात्रेणोपपत्तौ क्विबभावकल्पनमनौचितमित्याशयेनाह—आत्मनेपदेति। मूले—सुमङ्गलीरियमिति। अत्र 'सुमङ्गली'इत्युदाहरणम्बोध्यम्। सुमङ्गलीरियमिति स्त्रीप्रत्ययान्तप्रसङ्गादुच्चारितम्। क्वचित्तु सुमङ्गली शिवेति पाठः। यदि तु सुमङ्गलीरित्येवोदाहरणमित्याग्रहस्तदा छान्दसत्वात्सुलोपाभाव इति बोध्यम्।

अनुक्तत्वे हेतुमाह—अन्तरिति। ननु न तन्मुधा यज्ञसंयोगाभावादत आह—विभाषेति। अत एव—यज्ञसंयोग इत्यस्य तत्रासम्बन्धादेव।

"एतक्रतोरै च" (पा०सू०४।१।३६) ॥ ऐकार आदेशो न तु प्रत्ययः। उत्तरसूत्रे उदात्त इत्युक्तेः। **न त्विति।** अन्यथा वृषाकपिशब्दो "लघावन्ते द्वयोश्च बह्वषो गुरुः" (फि०सू०) इति मध्योदात्त उदात्तत्वं प्रयोजयति, अग्न्यादिषु त्रिषु "स्थानेऽन्तरतम" (पा०सू०१।१।५०) इत्येव सिद्धमिति प्राचां ग्रन्था विरुध्येरन्निति भावः।

**उदात्तैकार इति।** मनुशब्दो ह्याद्युदात्तः। "शृस्वृस्निहि" इत्यादौ मनुप्रत्ययविधायके सूत्रे "धान्ये नित्" इत्यधिकारात्। समासनिर्देशेनतद्दर्शयति—उदात्त इत्यनुवर्त्तमानं सम्बन्धानुवृत्तेरैकारेणैव सम्बध्यते, न त्वौकारेणापीति। ततश्च यदुक्तं प्राचा ऐकारौकारावुदात्तौ स्त इति, तदुपेक्ष्यम्। वृत्तिपदमर्य्यादिविरोधादिति भावः। **मनायीति।** मध्योदात्तम्। इतरद् द्वयमाद्युदात्तम्। **एता**—कर्बुरा। **वर्णानामिति।** 'एतः, शोणः, शितिः, पृश्निः, पृषत्' इत्युदाहरणानि। **श्येण्येति।** अत्र उत्तरपदस्योपसर्जनत्वेऽपि समस्तस्य अनुपसर्जनत्वमिति भावः। सञ्ज्ञात्वाद् णत्वं छान्दसत्वाद्वा।

---

इत्युक्तेरिति। प्रत्ययत्वे हि "आद्युदात्तश्च" (पा०सू०३।१।३) इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः। न त्वौकारेणेति। ततश्च स आन्तरतम्यादनुदात्त एवेति भावः। इतरद् द्वयम्-मनावी मनुरित्येतत्। समस्तस्येति। एतच्च गृह्यवृत्त्यनुसारेणोक्तम्। "टिड्ढाणञ्" (पा०सू०४।१।१५) इत्यादाविवात्रापि गृह्यमाणविशेषणत्वमेवेति "उपमानानि" (पा०सू०२।१।५५) इति सूत्रभाष्यसम्मते पक्षे त्रिषु स्थानेषु एनी श्येणीति बोध्यम्। छान्दसत्वाद्वा ङीप्। तद् ध्वनयन्सञ्ज्ञात्वानङ्गीकारे आह—छान्दसत्वाद्वेति। ङीप् णत्वं(१) चेति शेषः।

---

तद्वैयर्थ्यम्। उदात्तशब्दोपादानवैयर्थ्यम्। ततश्च—मनुशब्दस्याद्युदात्तत्वेनान्त्यस्यानुदात्ततया च। एतच्च—समासात्मकसमुदायस्यानुपसर्जनत्वस्य प्रदर्शनञ्च। गृह्यवृत्त्यनुसारेणेति। तत्र हि नारायणेन बहुव्रीहिमङ्गीकृत्वा ऽनेन ङीबित्युक्तम्। भाष्यसम्मत इति। तत्र हि "शस्त्री श्यामा इत्यत्र श्यामाशब्दः शस्त्र्यामेव वर्त्तते। उपमेयन्तु समासवाच्यमिति पक्षे शस्त्री श्यामो देवदत्त इत्यत्र ह्रस्वत्वन्न सिध्यति। यद्युपसर्जनह्रस्वत्वन्तदा कुम्भकपाललोहिनीत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोति" इत्युक्तम्, त्रिषु एनीत्यत्र "सुप्सुपा" इति समासः। "सुप्सुपा" इति समासकल्पनस्यागतिकगतित्वादाह—छान्दसत्वादिति। आर्षत्वादित्यर्थः। असंज्ञात्वादाह—णत्वञ्चेति। यदि त्वस्य संज्ञारूपत्वन्तदा छान्दसत्वन्ङीबंशे एव हेतुः।

वि० (१) अत्र समानपदत्वाभावान्न "अट्कुप्वाङ्नुम्व्यवायेऽपि" (पा० सू० ८।४।२) इत्यनेन णत्वम्। "पूर्वपदात्संज्ञायामगः" (पा० सू० ८।४।३) इत्यनेनापि संज्ञात्वाभावान्नणत्वमित्यर्थत्वादत्र णत्वं बोध्यम्॥

**क्रमेके इति।** अत्र छन्दसीति भाष्योक्तेर्लोके 'गतो गणस्तूर्णमसिक्निकानाम्' इत्यादिप्रयोगाः प्रामादिका इति प्राञ्चः। वस्तुतस्तु छन्दस्येके इत्यन्वयात् भाषायामपीति भाष्याभिप्रेतम्। अन्यथा एकग्रहणं न कुर्यात्। न हि छन्दसि 'पलिक्नीरिद्युवतय' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। **विशुद्धवाचीति।** दैप् शोधने इति स्मरणात्। 'अवदातः सितो गौर' इति कोशे तु विशुद्धत्वसाधर्म्यात् प्रयोगे उपनिबद्ध इति भावः। **लघाविति।** अन्ते-एकस्मिन्, लघौ-द्वयोश्च लघ्वोः परतो, बह्वषो-बह्वच्कस्य, गुरुरुदात्तः स्यात्। अषिति अचः प्राचां सञ्ज्ञा। **कृष्णेति।** "कृषेश्च" इति नप्रत्यये "कपेश्च" इति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ।

**"षिद्गौरादिभ्यश्च"** (पा०सू०४।१।४१)॥श्वन्शब्दोऽत्र पद्यते। तेन अन्येभ्यो ङीष् इत्यत्र यत्प्राचा शुनीत्युदाहृतं तत्प्रामादिकम्। यत्तु व्याचक्षते—श्वानमाचष्टे श्वेवाचरतीति वार्थे णिचः क्विपो वा क्वौ उपसर्जनत्वात् ङीषभावे शुनीत्यादिवत् ङीबिति। तन्न। णिचि सम्प्रसारणटिलोपयोरुक्तं रूपं मन्मते दुर्लभम्। अन्यत्र तु आस्तां कथंचित्।

प्राञ्च इति। कैयटादय इत्यर्थः। छान्दसेषु सूत्रेषु वाग्रहणवदिदमेक इत्यपीति तेषां भावः। न प्रत्यय इति। दशपाद्यनुसारेणेदम्। तत्र हि नप्रत्ययप्रकरणे "तृषिशुषिरसिकृषेश्च कित्" इति, इलच्प्रकरणे कपेश्चेति पठितम्। कपिः सौत्र इति चोक्तम्। पञ्चपाद्यां तु "कृषेर्वर्णे" इति नक्प्रत्ययः "कमेः पश्च" इति इलजित्युक्तम्।

पद्यत इति। इदं चासिद्धवत्सूत्रे भाष्ये स्पष्टम्। उक्तं रूपमिति। नान्तं रूपमित्यर्थः। णिचि "नस्तद्धिते" (पा०सू०६।४।१४४) इति टिलोपे तदभावः स्पष्ट एव। न च "नस्तद्धिते" (पा०सू०६।४।१४४) इति टिलोपो नेष्ठवन्न्यायेन, "टेः" (पा०सू०६।४।१४३) इति तु "प्रकृत्यैकाच्" (पा०सू०६।४।१६३) इति निषिद्ध-

---

वस्तुतस्त्वित्युक्तरीत्या कैयटमते एक इत्यस्य वैयर्थ्यम्प्राप्नोतीत्यतः कैयटाद्याशयमाह—छान्दसेष्विति। तेषाम्—कैयटादीनाम्। तत्र हि—दशपाद्यां हि। "षिद्गौरादिभ्यश्च" अस्मिन्गणे गवयादीनामपि पाठ इति कस्यचिन्मतम्, तन्न युक्तम्। "जातेरस्त्री" इतिसूत्रे "योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः" इति वार्तिकविरोधादिति कैयटः। एवञ्चात्र "सूर्यतिष्य" इतिसूत्रस्थ लेखो गौरादिषु मत्स्यशब्दस्य पाठभ्रमादिति बोध्यम्।

उक्तरूपमित्यस्य शुनीतिरूपमिति नार्थः, ङीप एवाप्राप्तेरत आह—नान्तमिति। एवञ्च नान्तत्वाभावेन "ऋन्नेभ्य" इत्यस्य न प्राप्तिरिति भावः। एतदेवोपपादयति—णिचीत्यादिना। तदभावः—नान्तरूपाभावः। खण्डनकारोक्तिन्निरस्यति-न चेति। नेष्ठवन्न्यायेनेति। यत् इष्ठनि दृष्टन्तस्यातिदेशो ह्यनेन क्रियते, "नस्तद्धिते" इति टिलोपस्तु न दृष्टः, इत्यस्यैव प्रवृत्तेः। परत्वाद्ब्रह्मिष्ठ इत्यादौ दर्शनात्। नाषद्धमिति। प्रकृतिभावे हि तस्य प्रवृत्तिर्भवतीति निषेधफलसम्पत्त्या निषि-

आवपनं चेदिति। ओप्यते निक्षिप्यते धान्यं यस्मिन्। गोणाऽन्यतीति। यस्या यादृच्छिकं नाम। अकृत्रिमेति। यथा—

मिति वाच्यम्। अस्य मतस्य नामधातौ दूषयिष्यमाणत्वात्। तद् ध्वनयतोक्तम्—मुख्यमते इति। "नस्तद्धित" (पा०सू०६।४।१४४) इत्यस्यापि प्रकृतिभाव इति 'षपूर्व' (पा०सू०६।४।१३९) इति "प्रकृत्यैकाच्" (पा०सू०६।४।१४३) इति सूत्रभाष्ये ध्वनितत्वेन पूर्वं टिलोपाभावेऽपि सम्प्रसारणे "वार्णादाङ्गम्" इति पररूपात्पूर्वं टिलोप इति तस्य दौर्लभ्यम्। तदुक्तं–सम्प्रसारणटिलोपयोरिति। अन्यत्रक्विबन्ताद् क्तौ। "अनुनासिकस्य" (पा०सू०६।४।१९) इति दीर्घेऽपि एकदेशविकृतन्यायेनान्त्वमिति सम्प्रसारणं भवतीति भावः। कथंचिदिति। अनेनारुचिः सूचिता। तद्बीजमेषामनभिधानम्। अन्यथा "अनुपसर्जनात्" (पा०सू०४।१।१४) इति

इमित्युक्तम्। नच प्रकृतिभावेनैव "नस्तद्धित" इत्यस्यापि प्रवृत्त्यभावे सिद्धे "नस्तद्धित" इति न दुष्ट इति हेतूपन्यासोऽयुक्त इति वाच्यम्। 'येन नाप्राप्तिन्यायेन' प्रकृतिभावस्य "टेः" इति सूत्रबाधकत्वस्यैव निर्णयात्। एवञ्च प्रकृतिभावाट्टिलोपासम्भवान्नान्तस्य लाभ इति मूलग्रन्थस्यमिति तदाशयः। अस्य मतस्य—प्रकृतिभावस्य "टेः" इति सूत्रमात्रबाधकत्वमिति मतस्य। यदि प्रकृतिभावः "टेः" इत्यस्यैव बाधकस्तदा नैकाजित्येव सिद्धे प्रकृत्येत्येतदुपादानस्य वैयर्थ्यमिति भावः। प्रकृतिभावस्य सर्वबाधकत्वादेव "अल्लोपोऽनः" इत्यल्लोपोऽपि तद्विषये नेतिप्रतिपादितम्। प्रकृत्येत्येतदुपादानसामर्थ्यात्तद्विषये न्यायाप्रवृत्तिरित्याशयः। अत एवाह—नस्तद्धितइत्यस्यापीति। अपिना टिलोपसामान्यसङ्ग्रहः। षपूर्वेतीति। तत्र हि-"किमिदं षपूर्वादीनाम्पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम्, कथं वा अल्लोपार्थम् कथं वा नियमार्थम्, यद्यविशेषेणाल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम्। अथ हि अणि टिलोपस्यैव प्रकृतिभावस्ततो नियमार्थम्"इति भाष्ये उक्तम्। तत्र कैयटः–प्रकृत्यैकाजित्यादिः प्रकृतिभावः प्राकरणिकानि कार्याणि भेदेनापेक्ष्येरन्नभेदेन वेति पक्षद्वयोपपत्तिरित्याह—अविशेषेणेति। अल्लोपटिलोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते भेदेनेत्यनेन बाध्यविशेषचिन्तोक्ता तदा"अनन्तरस्य"इतिन्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः। अस्मिन्पक्षे "अल्लोपोऽनः" इति सिद्धे नियमार्थं यदि बाध्यसामान्यचिन्ता तदा प्रकृतिभावस्य सर्वबाधकतयाऽल्लोपस्यापि प्रकृतिभावेन निवृत्तौ प्राप्तायां विध्यर्थमिदं सूत्रम्। अत्र भाष्ये–अल्लोपटिलोपयोरिति बाध्यसामान्यचिन्ताभिप्रायेणोक्तन्तदा "नस्तद्धिते" इत्यस्यापि प्रकृतिभावेन निवृत्तिरिति युक्तमेव। अत एव नैकाजितिना सूत्रीयकृत्यैकाजितीति तत्रहि प्रकृत्यैकाजिति किमिष्टमेयस्तु, आहोस्विदा विशेषेण, किन्त्वतः, यद्यविशेषेण खीखीशौवमधुना अत्रापि प्राप्नोति, तद्धितसामान्ये प्रकृतिभावविधानात् "अत इनिठनौ" इति खखशब्दयोरिनौ प्रकृतिभावे सति "यस्य"इति लोपाप्रसङ्ग, शौवमित्यत्र शुनो विकारावयवयोः प्राण्यञि कृते "नस्तद्धित" इति टिलोपो न प्राप्नोति अधुनेत्यत्र इदमः इशादेशोऽधुना प्रत्ययश्चेति, यदा प्रक्रिया तदा "यस्य"इति लोपाप्रसङ्ग इति पूर्वपक्षे-"एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ"इत्यनेन खिखिनोरनभिधानम्प्रतिपाद्य शौवमित्यस्य श्वन्शब्दादञि द्वारादित्वादैजागमस्य टिलोपस्य च प्राप्तौ परत्वादैजागमे प्रकृतिभावस्याप्राप्तौ "पुनःप्रसङ्गविज्ञानात्"टिलोपस्याप्रवृत्त्या सिद्धिमुक्त्वा ऽधुनेत्यत्र सम्प्रत्ययकस्य स्थाने निपातनङ्क्रियते इत्युक्त्वा तस्य सिद्धिरुक्ता। तत्रान्यथासिद्धिप्रदर्शनेन सूत्रस्य प्रत्याख्यानेऽप्यारम्भपक्षे प्रकृतिभावस्य "नस्तद्धित" इति टिलोपबाधकत्वं शौवमित्युदाहरणप्रदर्शनेन ध्वनितमित्यर्थः। तस्य–नान्तरूपस्य। तदुक्तमिति। तदेतदभिप्रेत्योक्तमित्यर्थः। एकदेशविकृतन्यायेनेति। स्थानिवद्भावेनेत्यर्थः। अनेन–कथञ्चिदित्युपादानेन। एषाम्—

'सैषा स्थली यत्र विचिन्वता त्वाम्' इति। **स्थलान्येति।** कृत्रिमा पुरुषेण संस्कृता। यथा—'स्थलयोदकं परिगृह्णन्ति'। **आणा**—पद्मा। **अयोविकार इति।** फाल इति प्रसिद्धः। **कुशान्येति।** छन्दोगाः स्तोत्रीयागणनार्थान् औदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति। "अतः कृकमि" (पा० सू० ८।३।४६) इति सूत्रे "हानौ तूपाय न" इति (१)व्याससूत्रे "कुशा वानस्पत्यास्थतामापात" इति श्रुतौ च प्रसिद्ध एवायम्।

**पतिंवरेति।** तथा च पाणिग्रहणोत्कण्ठाभियायित्वाद्गुणवचनोऽयमिति भावः।

**"बह्वादिभ्यश्च"** (पा०सू०४।१।४५)॥ बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धे उत्तरार्थं ग्रहणमित्याहुः। वस्तुतस्तु बहुशब्दो "नि-

सूत्रस्य तदन्तविधिज्ञापकता भाष्योक्ता भज्येत। किं चाचक्षाणकर्त्रादिरूपार्थस्यापि स्वशब्दार्थत्वेन तस्यानुपसर्जनत्वादस्त्येव ङीपः प्राप्तिः। (२)'अभिव्यक्त' इति न्यायस्तु पदकार्यविषय एवेति।

इत्याहुरिति। अत्रारुचिबीजं त्वाकडारसूत्रस्थभाष्यविरोधः। तत्र हि समस्तकृदन्ततद्धितसर्वनामजातिसंख्यासञ्ज्ञाशब्दातिरिक्तप्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञा

क्विबन्तात्क्विबन्तानाम्। भज्येतेति। यद्यस्याभिधानं स्यात्तदैतद्द्वारकतया तदधिकारस्य प्रकृतसूत्रे चरितार्थतया वैयर्थ्याभावेन ज्ञापकता भज्येतेत्यर्थः। अभिधानमभ्युपेत्याह—किञ्चेति। आचक्षाणकर्त्रादिरूपार्थस्य-आचक्षाणरूपो यः कर्त्रादिरूपोऽर्थस्तस्य। स्वशब्दार्थत्वेनेति। यः शिष्यते स लुप्यमानार्थाभिधायि'इति न्यायेन श्वन्शब्देनैव स्वकर्मकाख्यानकर्तुः प्रतिपादनादिति भावः। एवञ्च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनोपसर्जनत्वान्ङीषभाव इत्युपादानं विरुद्धमिति तात्पर्यम्। ननु "अभिव्यक्त" इति न्यायेनैतादृशस्य श्वन्शब्दस्य गणपठितशब्देन बोधनेऽपि ततो ङीष् न भविष्यतीत्यत आह-अभिव्यक्तेतीति। "हस्वनद्याप" इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विबभावाच्चेदृशानामनभिधानमित्यपि बोध्यम्।

मूले—उत्तरार्थमिति। "नित्यञ्छन्दसि" इति सूत्रार्थमित्यर्थः। अत्रेति। आहुरिति कथने। अतिरिक्तप्रातिपदिकमात्रस्येति। तत्रहि—"कानि पुनरस्य योगस्य प्रयोजनानि" इत्युपक्रम्य

प्र० (१) "हानौतूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्" (अ० ३ पा० ३ सू० २६) इति व्याससूत्रम्। अत्र कुशा—छन्द—स्तुत्युपगानवदित्युपमाचतुष्टयोपादानम्। तद्यथा-भाल्लविनां श्रुतौ 'कुशा वानस्पत्या स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणेऽपि शाट्यायनिनां श्रुतौ 'औदुम्बराः कुशा' इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते इत्यादि।

वि० (२) "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु"। अयं न्यायस्तावत् "गौणमुख्ययोर्मुख्ये कार्यं सम्प्रत्ययः" इत्येतन्मूलक इति भावः। पदकार्यत्वञ्च—सुबनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वमिति पूर्वमेव प्रपञ्चितम्॥

त्यं छन्दसि" (पा०सू०७।४।८) इत्युत्तरसूत्रं चेति द्वयमपि व्यर्थमेव । सर्वविकल्पानां छन्दसि व्यवस्थितत्वात् ।

पुंयोगादीति । तथा च गौणी वृत्तिरिति भावः । यदा तु मुख्यार्थात् "तस्येदम्" (पा०सू०४।३।१२०) इत्यण् तदा गौपीत्येव भवति । योगश्चेह दम्पतिभाव एवेत्येके । वस्तुतस्तु सङ्कोचे मानाभावाज्जन्यजनकता । बहुशब्दश्च संख्या । अत्रार्थे बहुग्रहणमपि मानम् । 'सत्त्वे निविशते' इत्यादि गुणलक्षणमपि तदेकवाक्यतापन्नमित्यन्यत्र प्रपञ्चितम् । व्यर्थमेवेति ।

---

"बाध्याः बाधिकाश्च सञ्ज्ञा दर्शिताः । तन्मध्ये या याः परा अनवकाशाश्च तास्ताः पूर्वाः सावकाशाश्च बाधन्ते" इत्युक्त्वा "अर्थवत्प्रातिपदिकम् गुणवचनमञ्च गुणवचनसञ्ज्ञकञ्च भवत्यर्थवत्" इत्युक्तम् । अत्र चकारोपादानेन प्रातिपदिकगुणवचनसञ्ज्ञयोः समावेशो दर्शितः । ततः समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गजातिरिति क्रमेण दर्शिताः । तत "एतच्च वक्तव्यम्" इत्युक्त्वा "संख्या संख्यासञ्ज्ञा वक्तव्या द्वु च द्वुसञ्ज्ञका वक्तव्या, का पुनर्द्वुसञ्ज्ञा षट्सञ्ज्ञा एकद्रव्योपनिवेशिनी संज्ञा इत्येतच्च वक्तव्यम्, किमर्थमिदमुच्यते, यथान्यास एव भूयिष्ठाः संज्ञाः क्रियन्ते, सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः, अपिच एतेनानुपूर्व्येण सन्निविष्टानाम्बाधनं यथा स्यात्, गुणवचनसञ्ज्ञायाश्चैताभिः सञ्ज्ञाभिर्बाधनं यथा स्यात्" इत्युक्तम् । एवंक्रमेण बाध्यबाधकभावे पाणिनेरपिसम्मतिमाह—अत्रार्थ इति । नचैवंसति राजपौरोहित्यादौ समाससंज्ञया गुणवचनसञ्ज्ञाया बाधात्कथं ष्यञिति वाच्यम् । ब्राह्मणादित्वात् । ननु बहुशब्दस्य "वोतो गुणवचनात्" इतिसूत्रभाष्योक्तगुणलक्षणक्रान्तत्वाद्गुणवचनत्वमस्त्येवेत्यत आह—सत्व इति ।

'सत्वे निविशतेपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः' ॥

इति गुणलक्षणमप्याकडारसूत्रस्थगुणवचनलक्षणैकवाक्यतापन्नमिति संख्यासञ्ज्ञयास्या बाधः स्यादेवेति भावः । सत्वे निविशते—द्रव्ये निविशते—प्रवर्तते, अपैति—द्रव्यस्य सत्वेऽपि नाशो भवति, एताभ्यां विशेषणाभ्यां सञ्ज्ञाया जातेश्च निरासः । नहि सञ्ज्ञा जातिश्चाश्रयस्य द्रव्यस्य सद्भावेऽपि रक्तादिशब्दवाच्यवत्कदाचित्प्रवर्त्तते कदाचिन्नेति । पृथग्जातिषु दृश्यते जात्याश्रयेषु पृथग्भिन्नाऽभिन्नश्च शब्दो दृश्यते । एतेन सर्वनाम्नो निवृत्तिः । यथा—शुक्लादिगुणतौल्येऽपि गोत्वाश्रये शुक्ल इत्येवाश्वे तु कर्क इति व्यवह्रियते नैवं सर्वनामशब्दाः । एवञ्जातिरूपं यद्द्रव्यत्वन्तद्वाचकस्य द्रव्यशब्दस्य घटपदार्दिषु विभिन्नजातीयेपु प्रवृत्तिदर्शनेऽपि कदाचिदपनीयेतन्नास्ति तेन तस्यापि निरासः । आधेयः—यत्नेन निष्पाद्यः । यथा—रक्तादिगुणा आश्रयसद्भावेऽपि यत्नेन निष्पाद्या भवन्ति । एतेन संख्याया निरासः । अक्रियाजश्च इत्यनेन कृदन्तनिरासः । क्रियाबोधकधात्वर्थंव च्यार्थप्रवृत्तिनिमित्तत्वम्पाचकादिशब्दानामिति तेषां क्रियाजत्वं प्रसिद्धमेव । साऽसत्वप्रकृतिः—इत्यनेन सत्ववाचकप्रकृतिभिन्नइत्यर्थकेन समासतद्धितान्तयोर्निरासः । यद्वाऽद्रव्यस्वभाव इति तदर्थः । यथा द्रव्यस्यासमवायिकारणन्तु संयोगनिवृत्तेर्नाशस्तथा यो न भवति स इति । अन्यत्र—भाष्यप्रदीपोद्योते । प्रपञ्चितमिति—यथासम्भवं विशेषणानां सार्थक्यमुपपाद्य तस्य लक्षणस्यैकदेशयुक्तित्वं दूषितमित्यर्थः । तथाहि आधेयश्चाक्रियाजश्चेत्येव लक्षणं कार्यम् । आधेय इत्यनेनानित्यत्वस्य, अक्रियाजश्चेत्यनेन नित्यत्वस्य लाभे सति नित्यानित्यवृत्तिजातिमत्वमित्येव वक्तव्यम् । न चैवन्तादृशसत्ताजातिमत्वं क्रियायामपि वर्तत इत्यतिव्याप्तिरिति वाच्यम् । द्रव्यावृत्तित्वेनापि जातेर्विशेषणात् । एतेनैव सर्वगुणसंग्रहे 'सत्वे निविशते' इत्याद्युक्तिर्विफलेति तद्भाष्यमेकदेशयुक्तिः । अत एव तथापाठान्तरन्तेषां विशेषणानां व्याख्यानेन सार्थक्यन्न प्रदर्शितम्भगवता । मूले—इत्येक इति । यथेयम्भर्तृपा-

भावोऽपीह गृह्यते। तथा च भट्टिः—

कौशल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्॥

इति। केकयदुहिता केकयी। "जनपदशब्दात्" (पा०सू०४।१।१६८) इत्यपत्यप्रत्यये तु कैकेयीति स्यात्। न च तस्य "अतश्च" (पा०सू०४।१।१७८) इति लुक्। "न प्राच्यभर्गादि" (पा०सू०४।१।१७) इति निषेधात्। तथा च कालिदासः-'कैकेयि कामाः फलितास्तव' इति। एतेन देवकी व्याख्याता।

**दुष्टो यवो यवानीति।** जात्यन्तरमेवानेनाभिधीयते। अयमेव तस्य दोषः। यदुक्तयवत्वजातेरभावेऽपि तदाकारानुकृतिः। **ङीष् वाच्य इति।** इदश्च तृतीये भाष्ये "इङश्च" (पा०सू०३।३।२१) इति सूत्रे स्थितम्। **कथमिति।** यत्तु वदन्ति—दीर्घोच्चारणसामर्थ्याद् आ अनुक् इति पदं विभज्यते। तत्रेन्द्रादीनामनुकैव सिद्धे आकारादेशविधा-

---

उत्तरार्थमिति वदतां मत इति शेषः।

गौणी वृत्तिरिति। लक्षणयेत्यर्थः। न त्वेषा गौणी, सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वात्।

इङश्चेति सूत्रे इति। 'अपादाने स्त्रियां घञ उपसंख्यानं तदन्ताच्च वा ङीष्' इति तत्रोक्तम्। उपेत्याधीयते यस्या इति विग्रहः। दीर्घोच्चारणेति। न चेन्द्रादिशब्देभ्य आचक्षाणणिचि टिलोपे इन्द्राणीति सिद्ध्यर्थं तत्। अदन्तत्वाभावेन तत्राप्राप्तेः। पदं विभज्यते इति। तत्र नकारोच्चारणसामर्थ्यात् श्रुतक्रमानुरोधेन च पूर्व-

प्रकृतान्वधादीन् लभ्यते, तथा तच्छब्दमपीति भाष्याक्षरस्वारस्यविदः। अपरे तु तद्भाष्यमुपलक्षणमित्याशयेन जन्यजनकभावात्मकोऽपि पुंयोगो ग्राह्य इति मेनिरे। तन्मतन्दर्शयति—वस्तुतस्त्वित्यादिना। देवकी व्याख्यातेति। "जनपदशब्दात्" इत्यञन्तस्तु नायम्, देवकस्य जनपदवाचकत्वाभावात्। न्यूनतापरिहारायाह—उत्तरार्थमितीति। सादृश्यसम्बन्धमूलेति—बहुव्रीहिः। लक्षणा हि शक्यतावच्छेदकारोपात्मिका। तत्र सादृश्यसम्बन्धो यत्र मूलन्तत्रैव लोके (१)गौणीतिव्यवहार इति भावः। प्रसादोक्तिम्मूले खण्डयति-यत्त्वित्यादिना। तत्र (?) अजादीति लुप्तपञ्चम्यन्तम्। दीर्घोच्चारणस्य परोक्तरीत्या सार्थक्यं खण्डयति—न चेति। तत्—दीर्घोच्चारणम्। अदन्तत्वाभावेनेति। न च ब्रह्माणीत्येतत्सिद्धितात्पर्यकदीर्घोच्चारणसामर्थ्यादत इत्यधिकारोऽपि बाध्यतामिति वाच्यम्। प्रतिलक्ष्यं लक्षणभेदेन नान्तप्रकृतिकब्रह्माणीत्यस्य साधकवाक्येऽत इत्यधिकारबाधेऽप्यन्यत्र तद्बाधे मानाभाव इत्याशयात्। ननु पदविभागेऽपि पूर्वमनुगागमस्ततोऽन्त्यस्याकारादेश इत्येव प्रक्रिया कुतो नेत्यत आह—तत्रेत्यादि। तत्र अनुकि यद्यागमोत्तरमाकारादेशः स्यात्तदा नकारस्यैवादेशः स्यादिति नकारोच्चारणवैयर्थ्यापत्तिरिति भावः। नन्विन्द्रादिशब्दे फलाभावादाकारादेशाभावेन तेष्वेव नकारोच्चारणञ्चरितार्थमित्यत आह—श्रुतक्रमेति। यथा "धिन्विकृ-

वि० (१) गौणीति। लक्ष्यमाण गुणसम्बन्धस्वरूपा। यथा-अग्निर्माणवक इत्यत्र। तथाहि-लक्ष्यमाणो यो गुणः शुचित्वादिः तत्सम्बन्धरूपा इत्यर्थः॥

नसामर्थ्यात् क्वचिदन्यतोऽपि विधानमनुमीयते। तेन ब्रह्माणी सिध्यतीति। तच्चिन्त्यम्। अनुकि कृते "अतो गुणे" (पा०सू०६।१।९७)इतिपररूपप्रसङ्गात्। नन्वकारोच्चारणसामर्थ्यात् दीर्घो भविष्यति, अन्यथा हि नुकमेवं कुर्यादिति चेत्, न। "अल्लोपोऽनः" (पा०सू०६।४।१३४) इत्यस्य बाधेन चरितार्थत्वात्। "पत्युर्न" (पा०सू०३।१।३३) इतिवदादेशे कर्त्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेत्, न। शर्वशब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति। "न संयोगात्" (पा०सू०६।४।१३७) इति निषेधात्। तस्मात् ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकमिति। एतेनानुक ह्रस्वादिरेव लाघवाद्वक्तव्य इति हरदत्तोक्तिरपि प्रत्युक्ता। **कर्मण्यणिति।** तदन्तान् ङीप् "पूर्वपदात्सञ्ज्ञायाम्" (पा० सू० ८।४।३) इति णत्वम्।

---

माकारस्ततोऽनुगिति बोध्यम्। स्पष्टार्थं दीर्घाकार आदेश उक्तः। **प्रसङ्गादिति।** इन्द्रादिशब्दे इति भावः। **अकारोच्चारणेति।** अनुकाति शेषः। **अल्लोपोऽन इत्यस्य बाधेनेति।** "अल्लोपोऽनः" (पा०सू०६।४।१३४) इत्यत्र लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः "बहुव्रीहेरूधस" (पा०सू०४।१।२५) इति सूत्रभाष्यसम्मततयाऽकाराभावे ऽवश्यप्राप्तस्य "अल्लोपोऽनः" (पा०सू०६।४।१३४) इत्यस्य बाधेनाकारोच्चारणस्य चारितार्थ्यादित्यर्थः। **न भविष्यतीति।** एवं च न तद्बाधनार्थाकारोच्चारणमिति पररूपस्य तेन बाधादिति भावः। **पररूपबाधनार्थमिति।** अल्लोपबाधनेन चरितार्थस्य पररूपबाधकत्वे मानाभावेनेन्द्रशब्दे पररूपबाधायाकारोच्चारणस्यावश्यकत्वेन त्वदुक्तकल्पनानवकाश इति भावः। **ङीबिति।** "इन्द्रवरुण" (पा०सू०४।१।४९)

ण्ययोर च" इति सूत्रोदाहरणे श्रुतक्रमानुरोधेनादेशस्य प्रवृत्तिरादौ भवति तथेहाप्याश्रीयत इति तात्पर्यम्। ननु ह्रस्वाकारादेश एव विधेयस्तेन ब्रह्मन्शब्दान्त्यनकारस्य निवृत्तौ तेन सह पररूपेऽपि अनुगागमाकारेण सह सवर्णदीर्घेण रूपस्य सिद्धौ दीर्घाकारस्य विधानवैयर्थ्यमित्यत आह—स्पष्टार्थमिति। सामर्थ्यात्पररूपबाधकल्पनापेक्षया दीर्घादेशे तच्छङ्कैव नोदेतीति भावः। **उक्त इति।** प्रकाशकृतेति शेषः। **पररूपप्रसङ्गादिति।** यद्यपि ब्रह्माणीत्यत्राकारादेशेन सिद्धिस्तथापि भवतैन्द्रादिशब्देष्वाकारादेशस्याकल्पनेन मूलोक्ता पररूपापत्तिरिन्द्रादिशब्देष्वित्यत आह—इन्द्रादिशब्द इति। अकारोच्चारणे सन्दिग्धमत आह—अनुकीर्तीति। यत्तु नुगागमेऽनो लाक्षणिकत्वेन "अल्लोपोऽन" इत्येतन्न स्यादिति मूलञ्चिन्त्यमित्याहुस्तदुक्तिन्निरस्यति—अल्लोपोऽन इत्यत्रेति। **सूत्रभाष्येति।** 'ऊधसो नकारो लिङ्गाधिकार' इत्येतद्व्याख्यानावसरे प्रतिपादितमेतत्। **अकाराभावे**—अनुक्यकाराभावे। **अवश्यप्राप्तस्येति।** पररूपस्य तु नावश्यप्राप्तत्वमिति तद्बाधे मानाभाव इति भावः। **एवञ्च।** आगमलिङ्गककारोच्चारणसामर्थ्येनाल्लोपाप्रवृत्तिसिद्धौ चेत्यर्थः। **तद्बाधनार्थम्**—अल्लोपबाधनार्थम्। **पररूपस्येति।** स्वाभावे प्राप्तस्यापीत्यादिः। **तेन**—अकारोच्चारणेन। **अल्लोपबाधनेनेति।** स्वाभावे ऽवश्यप्राप्तिकस्याल्लोपस्य बाधनेन। चरितार्थस्याकारस्य सत्वे तु "वार्णादाङ्गम्" इति न्यायेनैकादेशात्पूर्वंप्राप्तस्याल्लोपस्य बाधनेनेत्यर्थः। न चासमाननिमित्तकत्वात् कथं वार्णपरिभाषाप्रवृत्तिरिति वाच्यम्। अप्रसमन्निन्याज एव प्रवृत्तेः स्वीकारात्। त्वदुक्ते-

**वस्त्रक्रीतीति ।** वस्त्र भिस् क्रीत इत्यस्यामवस्थायां प्राक् सुबुत्पत्तेः समासेऽदन्तत्वात् ङीष् । **क्वचिन्नेति ।** "कर्तृकरणे कृता" (पा० सू० २।१।३२) इति सूत्रे बहुलग्रहणात् क्वचित्सुबन्तेन समासः । तत्र च सुपः प्रागेवान्तरङ्गत्वात् टाप्, ततोऽदन्तत्वाभावान्न ङीष् इति भावः ।

**तेन बाह्वीति ।** अयं भावः—"बहोर्नञ्वदुत्तरपदभूम्नि" (पा० सू० ६।२।१७५) "नञ्सुभ्याम्" (पा० सू० ६।२।१७२) "जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" (पा० सू० ६।२।१७०) इति ह्यन्तोदात्तताविधायकानि । तत्र जातिपूर्वादित्युक्ते बह्वादिपूर्वकस्यार्थाद्व्युदास इति । अस्वाङ्गपूर्वपदाद्विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमित्याह—**ऊरुभिन्नीति ।** **जातान्तादिति ।** "वर्णादनुदात्तात्" (पा० सू० ४।१।३९) इतिवद् "बहुव्रीहेरुदात्तात्" इत्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम् । "वा जाते" (पा० सू० ६।२।१७१) इति तु वैकल्पिक उदात्तो, न तु नित्य इति भावः । **सुमुखाशालेति ।** एवं च 'फलमुखी कारणमुखी चावनस्था' इत्यादिप्रयोगाः प्रामादिका इति बोध्यम् ।

---

इति सूत्रं त्विन्द्रीत्यादिव्यावृत्त्यर्थम् । उदात्तनिवृत्तिस्वरेण च स्वरे न विशेष इति भावः ।

**सुबुत्पत्तेरिति ।** टाबुत्पत्तेश्चेत्यपि बोध्यम् । **बहुलग्रहणादिति ।** तत एव "गतिकारक"इत्यादेरनित्य(१)त्वेनाप्रवृत्तिरिति भावः । **सुखादिभ्य इति ।** सुखादयश्च 'सुखादिभ्यः कर्तृवेदनायाम्' इत्यत्र पठिताः सुखदुःखकृच्छ्रादयः ।

---

ति । प्रकाशाद्युक्तपूर्वोक्तेरित्यर्थः । ननु यथा ब्रह्माणीत्यस्य सिद्धिः कृता तथैवेन्द्राणीत्यादिसिद्धौ "इन्द्रवरुण" इति सूत्रस्य वैयर्थ्यमत आह—इन्द्रवरुणेतीति । इन्द्रीत्यादिव्यावृत्त्यर्थम्—पुंयोगे प्राप्तस्येन्द्रीत्यादेर्व्यावृत्त्यर्थम् । यद्यपि सूत्रारम्भे इन्द्राणीत्यन्तोदात्तमिन्द्रमानयतीति रीत्या तत्साधने तु ङीबन्तत्वेनानुदात्तान्तत्वमिति स्वरेऽपि विशेष इति, तन्नेत्याशयेनाह—उदात्तनिवृत्तिस्वरेणेति ।

वस्त्रेण क्रीता इति विग्रहस्थले ऽलौकिकविग्रहवाक्ये सुबुत्पत्तेः प्राक् समासेऽपि टाबुत्पत्त्यनन्तरं यदि समासस्तदा वस्त्रक्रीतीत्यस्यासिद्धिरत आह—टाबुत्पत्तेरिति । एवञ्च "गतिकारकोपपदानाम्" इति वचने सुब्ग्रहणं स्त्रीप्रत्ययस्याप्युपलक्षणम् । वचनान्तरानारम्भकृतलाघवन्दर्शयति—तत एवेति । बहुलग्रहणादेवेत्यर्थः । गणपाठे सुखादिप्रदर्शनाभावादाह—सुखादयश्चेति । कृच्छ्रादय इत्यत्रादिना । आस्त्रअलीकादयो विवक्षिताः । तथाच "जातिकालसुखादिभ्य" इत्यत्र गणपाठाप्रदर्शनेऽपि "सुखादिभ्य" इति सूत्रे ये निदर्शितास्तेऽत्र ग्राह्या इति भावः ।

---

बि० (१) अन्येतु अस्या अनित्यत्वे न मानम् । 'धनक्रीता' इत्यस्य तु अजादित्वात्सिद्धिः । 'गोत्रा' इत्यत्र तु "न पदान्त" (पा० सू० १।१।५८) इत्यत्र पदपदस्य पदत्वयोग्यपरत्वेन स्थानिवत्वनिषेधसिद्धिरिति "न पदान्त" (पा० सू० १।१।५८) सूत्रे शब्देन्दुशेखरे स्पष्टम् ।

**उरः क्रोडेति ।** स्त्रीलिङ्गोऽयमिति हरदत्तादयः । तत्रोपसर्जनह्रस्वत्वे कृतेऽदन्तत्वाद् ङीषः प्राप्तिः । अमरस्तु—'न ना क्रोडं भुजान्तरम्' इत्याह । रत्नमतिस्तु पुंस्त्वमाह । गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते, न तु टाबन्तमिति गणरत्नमहोदधिकारः । एवं चाविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम् । माधवस्तु तुदादिगणे 'क्रुड—निमज्जने' इति धातावाह—क्रोडः । घञ् । (१)क्रोडादिषु टाबन्तस्यैव पाठाद् भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणङीष्विकल्पो भवत्येव । कल्याणक्रोडी कल्याणक्रोडा मयूरीति ।

**ङीषो ङीबादेश इति ।** "दिक्पूर्वपदात्" (पा०सू०४।१।६०) इति पञ्चम्या ङीषिति प्रथमायाः षष्ठी कल्प्यत इति भावः । यदि तु स्वतन्त्रो ङीप् स्यात्, तदा प्राग्गुल्फादावपि प्रसज्येत । पूर्वोक्तपर्युदासस्य निषेधानां चानुवृत्तौ तु गौरवमिति भावः । **वृषलीति ।** एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विना तस्य सुग्रहत्वादिति भावः । **औपगवीति ।** अणन्तलक्षणं ङीपं परत्वादयं बाधते । एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय "टिड्ढाणञ्" (पा०सू० ४।१।१५) इति ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः । **ब्राह्मणीत्यत्रेति ।** एवं च प्राचो ङीषुदाहरणं प्रामादिकमिति भावः ।

---

'सकृदाख्यातनिर्ग्राह्या' इत्यन्तं द्वितीयं लक्षणम् । तत्राख्यातमुपदेश इत्याशयेनाह—एकस्यामित्यादिति । ब्राह्मणत्वमप्येवं तत् पितृपितामहादौ सुग्रहमिति बोध्यम् । इयं च नाकृतिग्रहणा, ब्राह्मणक्षत्रियाद्याकारस्य समत्वादिति बोध्यम् । बाधते इति । गोत्राणीति शेषः । प्रतीकमुपादायेति । औपगवीत्यस्य गोत्रानन्तरापत्यसाधारणत्वेन विशिष्य इति तदुक्तिरुपेक्ष्येत्यर्थः । एतेन जातिलक्षणे "एको गोत्रे" (पा० सू०४।१।९३) इतिसूत्रस्थभाष्यप्रामाण्येन पारिभाषिकगोत्रस्यैव ग्रहणम् ।

---

'लिङ्गानाञ्च न सर्वभाक्' इत्येव द्वितीयलक्षणमिति भ्रमवारणायाह—सकृदित्यन्तमिति । तत्र लक्षणे आख्यातपदन्न तिङन्तपरमित्याह—तत्रेति । लिङ्गानाञ्चेति चशब्दो निर्ग्राह्येत्यनन्तरम्बोध्यः । उपदेश इति । कथनमित्यर्थः । परममूले—"जातेरस्त्री" इति सूत्रे द्वितीयलक्षणलक्ष्यप्रदर्शनावसरे वृषलीति प्रदर्शितन्तेन ब्राह्मणत्वञ्च जातिरिति भ्रमः स्यादत आह—ब्राह्मणत्वमप्येवमिति । अपिना क्षत्रियत्ववैश्यत्वयोर्ग्रहणम् । वक्ष्यमाणदोषस्य प्रकृतेऽभावायाह—गोत्रेति । गोत्रार्थकेऽणीत्यर्थः । "एको गोत्र" इति सूत्रस्थभाष्यविरोधेनापत्यप्रत्ययान्त इत्येतन्मात्राभिधानं यत्परममूले कृतन्तदयुक्तमिति यत्केनचिदुक्तन्तदयुक्तमित्याह—एतेनेति । परममूलस्यापि भाष्यसम्मतरीत्या व्याख्यानेनेत्यर्थः । जातिलक्षणे—"जातेरस्त्री" इति जातिलक्षणे । भाष्यप्रामाण्येनेति । तन्नहि—

---

प्र० ( १ ) क्रोडा अश्वानामुरः, टाबन्तोऽयं स्वभावतो विशेषविषयः । इति पाठोऽधिकः क्वचिद् दृश्यते ।

**कुरूरिति** । लिङ्गविशिष्टपरिभाषया स्वादयः । प्राचा तु "अन्तादिवच्च" (पा०सू०६।१।८५) इति सूत्रमुपन्यस्यादिवद्भावात्स्वादय इत्युक्तम् । अत्रेदं वक्तव्यम्—परं प्रत्यादिवद्भावो विधीयते । तथा चेहा-

---

अवन्तीत्यादेर्गोत्रत्वारोपेण जातित्वमिति प्राचीनोक्तमदुष्टमित्यपास्तम् ।

**लिङ्गविशिष्टेति** । यत्तु लिङ्गबोधकप्रत्ययान्तत्वरूपलिङ्गवैशिष्ट्यस्य प्रातिपदिकत्वस्य च लाभाय पूर्वान्तत्वपरादित्वयोरावश्यकत्वेनोभयत आश्रयणेऽन्तादिवत्वाभावान्नात्रेयमिति, तन्न । इन्द्राणीत्यसिद्ध्यापत्तेः । तस्मात् प्रातिपदिकत्वोपयोगो न कश्चि-

"गोत्राद्यूनि प्रत्ययो भवति, स्त्रियान्तु लुक्" इति न्यासे औपगवी माणविकेत्यत्राण् योऽनुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति माभूदेवमणन्तादनुपसर्जनादित्येकदेशिनोक्तं तदभ्युपेत्य, इह तर्हि औपगवीभार्यः जातिलक्षणः पुंवत्वस्य प्रतिषेधो न प्राप्नोति, माभूदेवम् "वृद्धिनिमित्तस्य" इत्येवम्भविष्यति, एवन्तर्हि ग्लुचुकायनीभार्य इत्यत्र दोष इत्यनेन युवापत्यप्रत्ययान्तेऽजातित्वाद्दोषाधानङ्कृतम् । तत्र औपगवी माणविकेत्यत्र "टिड्ढा" इति सूत्रात् "जातेः" इति सूत्रस्य परत्वात्तस्यैव प्रवृत्त्यभिधाने कर्त्तव्ये "टिड्ढा" इत्येतदभिधानमपत्यसामान्यस्य जातिलक्षणे ग्रहणे विरुध्येत, एवञ्जातिलक्षणपुंवत्वस्य प्रतिषेधो न प्राप्नोतीत्यपि विरुध्येत । नन्वेवमवन्तीत्यत्रानन्तरापत्यप्रत्ययान्ते "वृद्धेत्कोसला" इत्यनेन ञ्यङि तस्य "स्त्रियामवन्ति" इत्यनेन लुकि "इतो मनुष्यजातेः" इति ङीषिति "अनुपसर्जनात्" इति सूत्रभाष्ये उक्तम्, तद्विरुध्येतेत्यत आह—अवन्तीत्यादेरिति । गोत्रत्वारोपेणेति । यथादवत्थाम्नि द्रौणायनित्वारोपस्तद्वत् यूनि तु न गोत्रत्वस्यारोपः, तत्र युवैव न गोत्रमिति नियमस्य प्रदर्शनात् । प्राचीनोक्तम्—प्रकाशकृदुक्तम् । अदुष्टमिति । "एको गोत्रे" इत्यत्र पारिभाषिकस्य ग्रहणेऽपि प्रकृते पारिभाषिकस्यैव गोत्रत्वे मानाभाव इति तदाशयः । किञ्चात्र तैः साधारण्येनोक्तं तत्र तु विशिष्येति तेषाम्पूर्वापरविरोधोऽपि दोषः ।

खण्डनकृता लिङ्गविशिष्टपरिभाषयेति मूलोक्तमर्थतो व्याख्याय खण्डितन्तन्न युक्तमित्येतद्बोधयितुं तदुक्तमनूद्य दूषयति—यत्त्वित्यादिना । वैपरीत्येनान्वयोऽत्र बोध्यः । अयम्भावः—यत्र प्रकृतौ प्रातिपदिकत्वस्य लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता; तत्र तादृशसमुदायस्य तया परिभाषया ग्रहणम्बोध्यते । यथा पक्त्री दण्डिनीत्यादौ सद्भावे उभयोरस्तीति तस्य समुदायस्य प्रातिपदिकग्रहणेन ग्रहणम्भवतीति । नात्रेति । कुरूरित्यत्र तथा नास्तीत्यर्थः । अत्रहि—पूर्वान्तवद्भावं विना प्रातिपदिकत्वस्य परादिवद्भावं विना लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता नास्तीत्युभयोरावश्यकतया "उभयत आश्रयणे नान्तादिवत्" इति निषेधः प्रवर्तत इति यत्र न पूर्वान्तवत्त्वपरादिवत्त्वयोरुपयोगः, तस्य ग्रहणम्परिभाषया भवतीति भवदुक्तमिन्द्राणीत्यादौ नास्ति । अत्र स्त्रीप्रत्ययान्तसमुदाये प्रातिपदिकत्वन्नास्ति, यत्रच प्रकृतिभागे प्रातिपदिकत्वमस्ति, तत्र तादृशप्रत्ययान्तत्वन्नास्ति । अन्तशब्दस्य चरमावयववाचकत्वात् । इन्द्राणीत्येतदेकदेशाभावोदाहरणोपलक्षणम्, तेन दण्डिनीत्यादेरपि भवदुक्तरीत्या ग्रहणन्न स्यादिति 'प्रातिपदिकग्रहण' इति परिभाषा निष्फला स्यादिति भावः । तस्मात्—परिभाषया यस्य समुदायस्य ग्रहणम्भवता बोधनीयन्तस्यैव ग्रहणाभावापत्तिसद्भावात् । उपयोग इति । परिभाषायाः प्रवृत्तिकोटावित्यादिः । नन्वन्तशब्दो न सर्वत्र चरमावयवस्यैव बोधकोऽस्ति । "अतोॢन्तस्य" इत्यादौ व्यभिचारात् । किन्तु समीपवाच्यपि । तथाच परिभाषाघटकं यद्विशिष्टपदन्तस्यान्तपरत्वेऽपि तदर्थः समीप इत्येव । एवञ्च गृह्यते येन तद्ग्रहणम्, प्रातिपदिकस्य ग्रहणम्प्रातिपदिकग्रहणमिति, समासाश्रयणेन प्रातिपदिकवाचकः शब्दो बोध्यते । तस्मिन् लिङ्गबोधकप्रत्ययः समीपो यस्य, तद्ग्रहा-

प्रत्यय इति प्रतिषेध एव स्यान्न तु स्वादयः। यत्तु व्याचख्युः—आदिः उभयेतया पूर्वः प्रातिपदिकं, तद्भावात् तदवयवत्वेन ग्रहणात् पूर्वान्तवद्भावादिति यावदिति। तदपि क्लिष्टं स्वपरग्रन्थविरुद्धम्। उक्तरीत्या हि काण्डे कुड्य इत्यादावपि "एकवचनमुत्सर्गत" इति सुः प्रवर्तेत। तद्वारणाय चाप्रत्यय इति प्रसज्यप्रतिषेधाभ्युपगमे प्रकृते दोषः। श्वश्रूरित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया एव आवश्यकत्वाच्च। यत्तु तत्र "श्वशुरः श्वश्र्वा" (पा०सू०१।२।७१) इति निर्देशात्स्वादय इति, तन्न। निर्देशस्य शब्दपरत्वात्। "विपराभ्यां जेः" (पा०सू०१।३।१९) "ङेर्यः" (पा०सू०७।१।१३) इतिवत्।

---

त्। नापि लिङ्गविशिष्टप्रातिपदिकस्येति परिभाषायां पठ्यते। तया प्रातिपदिकत्वतद्व्याप्यधर्माणां(१) लिङ्गप्रत्ययविशिष्टेऽतिदेशाच्चेति दिक्।

ननु "सप्तम्यधिकरणे च" (पा०सू०२।३।३६) इति निर्देशेन विभक्त्येकादेशस्यान्तवत्त्वाभावज्ञापनादुत्सर्गस्यासार्वत्रिकत्वाच्च ह्रस्वस्य सत्त्वप्रधाने एव प्रवृत्तेश्च काण्डे इत्यादौ न दोषोऽत आह—श्वश्रूरित्यत्रेति।

---

न्तमात्रम्परिभाषया बोध्यत इति नेन्द्राणीत्याद्यसङ्ग इत्यत आह—नापीति। इदम्भवदुक्तन्तादृशपाठसत्त्वे वक्तुं शक्यम्, वस्तुतो यत्परिभाषायाः कृत्यन्तदाह—तयेति। दिगिति—दिगर्थस्तु 'प्रातिपदिकग्रहण' इति सप्तमी कर्त्रर्थे व्यत्ययेन, प्रातिपदिकपदञ्च प्रातिपदिकत्वतद्व्याप्यान्तरधर्मविशिष्टपरम्, तथाच प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टस्य ग्रहणं यत्र शास्त्रे तेन लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणम्बोधनम्भवतीत्येव परिभाषार्थः, इति न कुरूरित्यत्रादिवत्त्वोपयोगः, इति कुरूरित्यस्य साधुत्वन्न लिङ्गविशिष्टपरिभाषया भवतीति ब्रूमः, किन्तु "अन्तादिवच्च" इति सूत्रेणेति वदामः। अत आदिवद्भावादिति पदं यदर्थकन्तदाह मूले—यत्तु व्याचख्युरित्यादिना। तदपि—तादृशव्याख्यानमपि। क्लिष्टम्। आदिशब्दस्याद्यवयवत्वावच्छिन्नबोधकत्वस्य "आद्यन्तौ टकितौ" इत्यत्र क्लृप्तस्य त्यागेन क्लिष्टमित्यर्थः। स्वपरग्रन्थेति। स्वस्य व्याख्यातुर्यः परग्रन्थस्तद्विरोध इत्यर्थः। काण्डे कुड्ये इत्यत्र यथा प्रसज्यप्रतिषेधाश्रयेण भवता सुबुत्पत्त्यापत्तिरूपो दोषो वार्यते, तथा कुरूरित्यादावपि सुबभावापत्तिः स्यादित्याह—उक्तरीत्येति।

प्रक्रियाव्याख्यानपरप्रकाशग्रन्थे यथा न स्वपरग्रन्थविरोधात्मको दोष आपतति, तथाशङ्कते—नन्विति। ज्ञापनादित्यन्तेन मूलोक्तप्रकारमुद्भाव्य सिद्धान्तरीत्याह—उत्सर्गेत्यादि। असार्वत्रिकत्वादिति। गमकसद्भाव एव तत्प्रवृत्तेः स्वीकारादिति भावः। सत्त्वप्रधान एवेति। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति न्यासेन सिद्धे प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकलाभार्थमिति भावः। मूले—आवश्यकत्वाच्चेति। तथाच लिङ्गविशिष्टपरिभाषाङ्गीकारस्यावश्यकतया तयैव कुरूरित्यस्यापि सिद्धावादिवद्भावादिति कथनस्य नोपयोग इति भावः। परोक्तां श्वश्रूरित्येतत्साधकरीतिमनूद्य दूषयति-यत्त्वि-

वि० (१) लिङ्गप्रत्ययविशिष्टे इति। लिङ्गबोधकप्रत्ययविशिष्टे इत्यर्थः। वैशिष्ट्यञ्च—स्वघटितत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व, स्वविशिष्टाघटितत्व, एतत्त्रितयसम्बन्धेन। स्ववैशिष्ट्यञ्च—स्वेतरत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्व, एतदुभयसम्बन्धेन। लक्षणसमन्वयोऽन्यत्र स्पष्टः।

**श्वशुरस्येति** । पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् । तत्सन्नियोगेन च विधीयमानो लोपः सन्निहितत्वादन्तस्यैवाकारस्य न त्वादेः । एतच्च वचनं "श्वशुरः श्वश्र्वा" (पा०सू०१।२।७१) इति निर्देशसिद्धार्थकथनपरम् । अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः ।

**उपमानवाचि पूर्वपदमिति** । 'धात्रीकराभ्यां करभोपमोरुः' इत्यत्र तु न । करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् । **शफौ खुराविति** । यद्यपि 'शफं क्लीबे खुरः पुमान्' इत्यमरः, तथाऽपि शफशब्दस्य पुंस्त्वमपि बहुसम्मतम् । "शफाविव जर्भुराणा" इति श्रुतौ "ग्राम्यपशुसंघेषु" (पा०सू०१।२।७३) इति सूत्रस्य व्याख्यावसरे न्यासहरदत्तादिग्रन्थेषु वाचस्पत्यादिनिबन्धेषु च प्रचुरप्रयोगदर्शनात् । "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्याच्च । 'शफो भुजो गुदं घोणा' इति गणरत्नमहोदधौ । क्रोडादिगणे पाठाच्च 'शफः खुरे

---

वचनमिति । वृत्त्यादिपठितमित्यर्थः । उपमानं सादृश्यं तदभावात् तस्य समासावाच्यत्वादित्यर्थः । यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः । शफोरुरित्यत्रापि

---

ति । भाष्ये तादृशवचनानुपलम्भादाह—वृत्त्यादीति ।

मूले—अतोऽपीति । अतः—"श्वश्रुरः श्वश्र्वा" इतिनिर्देशात् । अपिना । ऊङ्सन्निहितत्वस्य समुच्चायकः । क्याप्सूत्रस्थभाष्यस्वारस्यात्तु श्वशुरशब्दादूङि श्वश्रूशब्दस्य सिद्धिरिति न, किन्त्वव्युत्पन्नोऽयमिति तत्रहि "ङ्याब्ग्रहणं किमर्थम्, न, प्रातिपदिकादित्येव सिद्धम्, न सिध्यति, 'अप्रत्यय' इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति, यद्येष ङ्याब्ग्रहणे हेतुः, इत्यूङ्ग्रहणमपि कर्तव्यम्, तावपि हि प्रत्ययौ तिग्रहणे तावद्वार्तम्, तद्धितः प्रातिपदिकमिति, प्रातिपदिकसंज्ञा भविष्यति, ऊङ्ग्रहणेचापि वार्तम्, उवर्णान्तादूङ् विधीयते, तत्रैकादेशः, एकादेशे कृते पूर्वस्यान्तवद्भावात्प्रातिपादकसंज्ञा भविष्यति" एवमूङ्ग्रहणस्याकर्तव्यतोक्ता । यदि मूलोक्तरीत्याऽस्य सिद्धिस्तदा तत्रोक्तैकादेशाभावेनैतदर्थमूङ्ग्रहणस्यावश्यकत्वेन पूर्वान्तवद्भावेन तस्यानावश्यकत्वप्रतिपादनं विरुध्येतेति । ननु वस्तुत उपमानसत्वादुपमानाभावादित्यसङ्गतम् । किञ्च "ऊरूत्तरपद" इतिसूत्रे 'उपमानेति शब्दो नोपात्त, इत्युपमानाभावादित्यसङ्गतमत आह—उपमा उपमानमिति । उपमानशब्दे भावे ल्युडिति ध्वननायोपमा उपमानमित्युक्तम् । अत एवाह—सादृश्यमिति । ननु करभोरूरित्यत्रोदाहरणे पीवरशब्दस्योपमावाचकस्याभावादुपमायाः कथम्प्रतीतिः तस्यैवादिशब्दसत्व एव प्रतीतेरत आह—तस्येति । सादृश्यस्येत्यर्थः एवञ्च करभोरूरित्यत्र सादृश्यान्तर्भावेन वृत्तिस्वीकारादुपमायाः प्रतीतिरस्ति करभोपमोरूरित्यत्र तु सादृश्यस्य समासवाच्यत्वन्नास्तीति भावः । मूलस्थोपमानशब्दः करणल्युडन्त एवास्त्वित्याशयेनाह—यद्वेति । प्रतीत्यभावादिति । पूर्वपदार्थस्येत्यादिः । एवञ्चोपमीयतेऽनया सा उपमा, उपमानत्वम्-सादृश्यमित्यर्थः । तद्बोधकम्, ऊरूत्तरपदम्प्रातिपदिकमत्र नास्ति यादृशस्थले समासस्य सादृश्यान्तर्भावेण शक्तिस्तत्रेष्यते सूत्रस्य प्रवृत्तिः । उवर्णान्तादित्येव वक्तव्ये उत्तरपदग्रहणेन पूर्वपदस्याक्षेपात्तत्र पूर्वपदस्योपमावाचकत्वन्तत्रास्य सूत्रस्य प्रवृत्तेरिति भावः । यत्तु खण्डनकृदाह—शफौ खुरौ ताविव संश्लिष्टत्वादुपचारादिति चिन्त्यम् । उपचारेऽपि पूर्वपदस्योपमानवाचित्वव्याघातात्पूर्वसूत्रेणैव सिद्धयैह शफग्रहणवैयर्थ्यम् । अतः संहितवाचकः शफशब्द इति तन्नेत्याशयेनाह—शफोरूरित्यत्रेति । एवञ्च शक्यतावच्छेदकस्यारोपोऽत्र; ननु सादृश्यान्तर्भावेण वृ-

